योगः कर्मसु कौशलम्

AHNIK VARTA PATRAM
Email - ahnikvartapatram@gmail.com

# आह्निक वार्ता पत्रम्

RNI No. : UPSAN/2018/76680

वर्ष-3 अंक 299 संस्कृत दैनिक/ प्रात; संस्करण | प्रयागराज 24 अगस्त 2021 मंगलवार | पृष्ठ-4 | मूल्य- 2 रुपये

### सुभाषितम्

उद्यमेन हि सिद्ध्यन्ति
कार्याणि न मनोरथैः।
यथा सुप्तस्य सिंहस्य प्रविशन्ति
न मुखेन मृगाः॥

अर्थ- कार्य उद्यम करने से पूर्ण होते हैं, मन में इच्छा करने से नहीं। जैसे सोते हुए शेर के मुंह में मृग अपने आप प्रवेश नहीं कर जाते।

**प्रदेशस्य पञ्चविंशतिमहिलाः मुख्यमन्त्रिणा योगिना आदित्यनाथेन सम्मानिताः,एकेन स्वरेण महिलाभिः उक्तं धन्यवादः योगिमहोदय!**

# उत्तर प्रदेशस्य महिलानां 'रक्षाकवचं' निर्मितीभूता 'मिशनशक्तिः'

### रक्षाबन्धनस्य पूर्वसन्ध्यायां मुख्यमन्त्रिणः हस्तयोः पुत्रीणां महिलानां सम्माननम्

### मिशनशक्तेः अन्तर्गतं सम्मानं प्राप्य प्रफुल्लितानि महिलानां मुखानि

**लखनऊ।** उत्साहस्य, उल्लासस्य करतलध्वन्येश्च मध्ये मञ्चे मुख्यमन्त्रिणः योगिनः हस्ताभ्यां यदा पृथक् पृथक् क्षेत्राणां महिलाः सम्माननं प्राप्तवत्यः तदा तासां मुखानि प्रसन्नतया प्रफुल्लितानि । योगिसर्वकारस्य योजनाभिः सह स्वकीयपरिश्रमम् उत्तरप्रदेशं च उत्तमप्रदेशरूपूण निर्मातुं सङ्कल्पं स्वीकृत्य पञ्चसप्ततिजनपदेषु पञ्चसप्ततिमहिलाभिः मुख्यमन्त्रिणः योगिनः आदित्यनाथस्य आभारः व्यक्तीकुर्वतीभिः उक्तं यत् अस्माभिः महिलानां सहयोगः प्रत्येकस्यां स्थितौ योगिना कृतः। तेन प्रदेशस्य महिलाः पुत्र्यश्च अन्तिमपङ्क्तितः प्रथमापङ्क्तिपर्यन्तम् आनयनस्य कार्यं कृतम् । इन्दिरागान्धिप्रतिष्ठाने मिशनशक्त्याः 3.0 शुभारम्भावसरे मिशनशक्त्याः प्रथमद्वितीयचरणयोः उत्कृष्टकार्यं कुर्वत्यः महिलाः सम्मानिताः । यासु पृथक् पृथक् विभागस्य महिलाः पुरस्कृताः । स्वयंसहायतासमूहस्य महिलाः, महिलाकल्याणविभागः, बालविकासपुष्टाहारविभागः, ग्रामविकासविभागः, सहकारिताविभागः, प्राथमिकशिक्षाविभागः, उत्तरप्रदेश–आरक्षिविभागः चेत्यादिभिः सह अन्यविभागानां महिलाः सम्मानिताः ।

**पृथक् पृथक् क्षेत्रेषु उत्कृष्टकार्यं कुर्वतीभिः महिलाभिः स्थापितं कीर्तिमानम्**



महिलाभिः उक्तं – योगिसर्वकारस्य स्वर्णिमयोजनाभिः प्राप्ता सहायता










## संक्षिप्त वार्ताः

### कल्याणसिंहः दिवंगतः

**लखनऊ।** उत्तरप्रदेशस्य भूतपूर्वः मुख्यमन्त्री तथा भा ज पा दलस्य वरिष्ठनेता च कल्याणसिंहः ड८९दिवं गतः। वार्धक्यसहजरोगैः लख्नौस्थस्य सञ्जयगान्धी पि जी इन्स्टिट्यूट ओफ् मेडिक्कल् सयन्स् आतुरालयस्य तीव्रपरिचरणविभागे प्रवेशितः सः शनिवासरे एव मृत्युमुपगतः प्रधानमन्त्री नरेन्द्रमोदी लख्नौ मध्यस्थे कल्याण सिंहस्य गृहं प्राप्य अन्तिमोपचारान् समार्पयत्। राष्ट्रपतिः रामनाथ कोविन्दः , उपराष्ट्रपतिः वेङ्क्य्य नायिडुः इत्यादयः प्रमुखाः अनुशोचनानि समर्पितवन्तः। कल्याणसिंहस्य अन्त्येष्टि कर्माणि अद्य सायं नेरोदायां गङ्गातटे विधास्यन्ति।



### अमेरिकायां डेल्टा प्रभेदेन मरणानि वर्धन्ते

वाषिङ्टण। यू एस् राष्ट्रे कोविडस्य डेल्टा प्रभेदकारणेन मरणानि वर्धन्ते इति तत्रस्थेन स्वास्थ्यविभागेन स्पष्टीकृतम्। सप्ताहैकस्य मृत्युमानं सामान्यतः 1016 इति उन्नीतम्। फेब्रुवरीतः अनन्तरम् अत्युन्नतं मृत्युमानमेतदिति यू एस् स्वास्थ्यविभागेन कथ्यते। तीव्र परिचर्या प्रकोष्ठं प्रवेशितानां संख्या अपि अनुदिनं वर्धते। फ्लोरिडा, मिसिसिपी, जोर्जिया ,टेक्सस् राज्येषु तीव्रपरिचर्याविभागस्य 90 प्रतिशतं प्रकोष्ठेष्वपि प्रवेशितानां अर्धाधिकाः कोविड्रोगिणः सन्ति। तथा च तत्र प्रतिदिन कोविड्रोगिणां संख्या सार्धैकलक्षमतीता। 967 जनाः गतदिने कोविड्बाधया मृताः।

### सुरक्षा संकल्पं स्वीकृतवतीभ्यः प्रदेशस्य महिलाभ्यः प्राप्तं सम्मानम्

उत्तरप्रदेश–आरक्षिविभागे स्वकीयसेवां प्रदीयमाना अयोध्यायाः प्रीतितिवारी उक्तवती यत् मिशनशक्तिः अभियानान्तर्गतं अहं सम्मानितः यस्य निमित्तम् अहं बहु प्रसन्ना अस्ति । अस्य अभियानस्य प्रथमद्वितीयचरणयोः अहं प्रतीभागिनी भवितुं शक्या एषा मम कृते गौरवस्य वार्ता अस्ति । अद्य मुख्यमन्त्रिणः योगिनः आदित्यनाथस्य हस्तयोः सम्मानं प्राप्य अहं बहु प्रसन्ना अस्मि । रायबरेलीजनपदस्य डलमऊ–आरक्षस्थानकस्य पूजाचौहान उक्तवती यत् मिशनशक्तिः अभियानेन अर्धजनसङ्ख्याभ्यः प्रोत्साहनं प्राप्तम् । तेनोक्तं यत् एतत् मम जीवनस्य सर्वतोऽमूल्यं सम्माननम् अस्ति । सन्तकबीरनगरस्य गौरीशुक्ला उक्तवती यत् मया मिशनशक्त्यभियानस्य प्रथमद्वितीयचरणयोः ग्रामात् नगरपर्यन्तं पुत्र्यः महिलाः च जागृताः। तासां सुरक्षायै अहं सर्वदा उद्यता अस्मि । अद्य तस्मै उत्कृष्टकार्याय अहं सम्मानितः यस्य निमित्तम् अहं मुख्यमन्त्रिणः योगिनः आदित्यनाथस्य आभारिणी अस्मि । फिरोजाबादस्य रिंकीसिंहः उक्तवती यत् अहं मुख्यमन्त्रिणः अन्तर्हृदयेन स्वागतं करोमि यत् तैः अहं सम्मानितः । यदि अनेन प्रकारेण कस्मिंश्चित् प्रदेशे महिलानां सम्मानं करिष्यते अपराः महिलाः अपि ताभिः प्रेरिताः भूत्वा अग्रे वर्धिष्यन्ते। महिलाबालविकासविभागतः बरेलीमण्डलस्य उपनिदेशिका नीता अहिरवार वाराणसीजनपदस्य संरक्षणाधिकारिणी निरुपमासिंहश्च सम्मानिते । उपनिदेशिका नीता अहिरवार उक्तवती यत् एतत् सम्माननं मम जीवनस्य सर्वतोवृहद् सम्माननम् अस्ति।

### स्वयं सहायता समूहस्य महिलाभिः उक्तं, योगि सर्वकारस्य योजनाः निर्मिताः सहायकाः

लखीमपुरखीरीजनपदस्य श्रीबाबूराम स्वयंसहायतासमूहस्य पूनमदेवी उक्तवती यत् वयं कदलीफलानां प्रकृतेभ्यः पृथक् पृथक् उत्पादं निर्मामः । अद्य मुख्यमन्त्रिणः हस्तयोः सम्माननं प्राप्य अहं बहु प्रसन्नताम् अनुभवामि अपि च अहं बहु उत्साहिता अस्मि । अहं मुख्यमन्त्रिमहोदयाय धन्यवादं करोमि येन स्वर्णिमयोजनाम् आरम्भद्वारा अस्मभ्यं महिलाभ्यः स्वावलम्बनस्य मार्गः दर्शितः । वाराणसीजनपदस्य गीतादेवी उक्तवती यत् सन्तोषीमाँग्रामसङ्गठनसमूहद्वारा सार्धम् अपरमहिलाः वृत्त्या संयोज्य मुख्यधारायाम् आनीता। अहं अद्य बहु प्रसन्नः अस्ति। अपि च मुख्यमन्त्रिमहोदयाय धन्यवादम् अपच्यामि येन अहं सम्मानितः । वयः महिलाः तस्मात् आशान्विताः स्मः। प्रयागराजस्य प्रमिलाकुमारी उक्तवती यत् अहं वित्तकोशसखीपदे कार्यं करोमि । अस्माकं समूहे दशमहिलाः संयुक्तरूपेण कार्यं कुर्वन्ति । स्वकीयनगरे, स्वकीयग्रामे एव जनेभ्यः वृत्तिप्राप्तिद्वारा अस्मभ्यं गृहेण साकं जीविकां च उभयं चालयितुं सहायता प्राप्यते ।रायबरेलीजनपदस्य रूबीनाज उक्तवती यत् स्वयंसहायतासमूहद्वारा अद्य अस्मभ्यं दिङ् प्राप्ता । योगिसर्वकारेण यदारभ्य दायित्वं स्वीकृतं तदारभ्य अद्य पर्यन्तं महिलानाम् उत्थाने कार्यं कृतम् । अस्य सम्मानान्तरं प्रयासः अस्ति अग्रे इतोऽपि सम्यक् करोमि शिक्षाक्षेत्रे प्राप्तम् एताभ्यः सम्माननम् डॉराममनोहर लोहियाराष्ट्रियविधिविश्वविद्यालयस्य प्रवक्त्री अलकासिंहः उक्तवती यत् मया मिशनशक्तिः मुख्यमन्त्रिणः एकस्वर्णिमयुगस्य आरम्भं मन्ये । महिलाविषयेषु अपि च स्वकीयलेखन्या समाजाय मार्गं दर्शयितुं एतत् सम्माननं प्राप्तम् । एतत् सम्माननं माम् अग्रे सकारात्मकं कार्यं कर्तुं प्रेरितं करिष्यते । गोरखपुरस्य महाराणा प्रताप परास्नातकमहाविद्यालयस्य शिप्रासिंहः उक्तवती यत् शिक्षायाः क्षेत्रे प्रदेशस्य पुत्र्यः उत्तमं प्रदर्शनं कुर्वन्ति। अद्य मुख्यमन्त्रिमहोदयस्य अनेन अभियानेन प्रदेशस्य महिलाभ्यः सहाय्यं प्राप्तम्। कोरोणाकालेएताभिः महिलाभिः कृतम् उत्कृष्टकार्यम् अयोध्यायाः नीतूराणा सहायक परिचायिका रूपेण कार्यं करोति तया उक्तं यत् मुख्यमन्त्रिणं योगिनम् आदित्यनाथं मिलित्वा अपि च तेषां हस्तयोः सम्मानं प्राप्य मम आत्मविश्वासः वर्धितः। मेरठस्य सहायकपरिचायिका शरैली उक्तवती यत् मिशनशक्ति–अभियानेन प्रदेशस्य महिलानां मान–सम्मानं वर्धितम् । यदारभ्य योगिसर्वकारेण प्रदेशस्य दायित्वं स्वीकृतं तदारभ्य महिलाभ्यः पुत्रीभ्यः अनेकानां स्वर्णिमयोजनानाम् आरम्भः कृतः येन ताभ्यः साक्षात् लाभः प्राप्स्यते ।

## जम्मुकाश्मीरे द्वौ भीकरौ व्यापादितौ



**श्रीनगरम्।** जम्मुकाश्मीरस्य पुल्वामा जनपदे सुरक्षासेनया सह जाते प्रतिद्वन्द्वे द्वौ हिस्बुल् मुजाहिदीनभीकरौ व्यापादितौ। तयोरेकः खरूप्रदेशस्थः मुसैब् मुस्ताख् नामकः इति प्रत्यभिज्ञातमस्ति। दक्षिणकाश्मीरेषु प्रदेशवासिनः जनान् भुषुण्डिप्रयोगेन हत्यां कृतवत्सु एतौ भागभागित्वं कृतवन्तौ इति आरक्षणाधिकारिभिः उक्तम्।

## केन्द्रीय संस्कृत विश्वविद्यालयस्य गंगानाथझा परिसरे संस्कृत सप्ताह व्याख्यानमाला सम्पन्ना

**प्रयागराजः। वार्ताहरः।** केन्द्रीय संस्कृत विश्वविद्यालयस्य गंगानाथ झा परिसरः प्रयागराजस्य तत्वावधाने अपराह्ने संस्कृत सप्ताह व्याख्यान मालायाः समायोजनं जूममीट माध्यमेन सम्यक्रूपेण सम्पन्नं जातम्।

समारोहस्यास्य अध्यक्षः डॉ प्रो ललित कुमार त्रिपाठी निदेशकः गंगानाथझा परिसरः प्रयागराजः, सरंक्षकश्च प्रो सुब्बरायुडु, कुलपतिः केन्द्रीय संस्कृतविश्वविद्यालयः नवदेहलीआस्ताम।समारोहेअस्मिन् मुख्य वक्तारौआस्ताम् यस्मिन् प्रथमः प्रो गंगाधर पण्डा, कुलपतिः विश्वविद्यालयः झारखण्डः



संस्कृतसाहित्यस्य विविधताइतिविषयमवलम्ब्य स्व व्याख्यानम् प्रस्तुतवान्च। अपरः वक्ता प्रो रामकुमार शर्मासंकायाध्यक्षः साहित्यम् केन्द्रीय संस्कृतविश्वविद्यालयस्य जयपुरपरिसरतः ध्वनेः लक्ष्यालक्ष्यक्रमविमर्शः इति विषये व्याख्यानं अददत्। समारोहस्य संयोजिके डा अपराजिता मिश्रः डा मोनाली दासश्च आस्ताम्। संयोजन समितेः अन्येसदस्याः डा जनार्दन प्रसाद पाण्डेयं मणिः प्रो रामकृष्ण पाण्डेयः परमहंसः डा सुरेश पाण्डेयः, डा श्यामसुन्दर पाण्डेयः प्रभृतयः समुपस्थिताः आसन्।

### संस्कृत भाषायाः प्रचारप्रसाराभ्यां सह युक्तेभ्यः भाषाविद्भ्यः विद्वज्जनेभ्यः च हार्दिक्यः शुभकामनाः प्रधानमंत्री

**नवदेहली।** प्रधान मंत्री संदेश एतत् ज्ञातवतः मम प्रसन्नता जाता यत् 19 तः 25 अगस्त पर्यन्तं संस्कृत सप्ताहस्य आयोजनं क्रियते इति। संस्कृत भाषायाः प्रचार प्रसाराभ्यां सह युक्तेभ्यः भाषाविद्भ्यः विद्वज्जनेभ्यः च हार्दिक्यः शुभकामनाः। संस्कृत भाषायां तस्याः साहित्ये च अस्माकं समृद्धं रिक्थं जीवनस्य सर्वेण क्षेत्रेण सह युक्तं ज्ञानं च समाहितम् अस्ति। एषा भाषा विपुलस्य साहित्यसमूहस्य, भारतीयस्य ज्ञानस्य, विज्ञानस्य, संस्कृत्याः, संस्कारस्य, दर्शनस्य मूल्यानां च अभिव्यक्तेः वाहिका अस्ति। विश्वस्य प्राचीनतमासु भाषासु अन्यतमा संस्कृतभाषा बह्वीनां भाषाणां संस्कृतीनां च अस्तित्वस्य आधारः अस्ति। अस्माकं पूर्वजाः, अस्माकं मनीषिणः स्वीयया तपस्यया एतां भाषां सर्वाभ्यः महत्तरां वैज्ञानिकभाषां कृतवन्तः। एषः आनन्दस्य विषयः अस्ति यत् अद्य तन्त्रज्ञानस्य माध्यमेन संस्कृतम् अधिकाधिकान् जनान् सहजतया प्राप्नुवत् अस्ति। विश्वे सर्वत्र संस्कृतभाषां प्रति जनानाम् अनुरागः वृद्धः अस्ति। संस्कृतस्य प्रचारप्रसारयोः कृते संस्कृतसंवर्धन प्रतिष्ठानस्य द्वारा क्रियमाणाः प्रयासाः प्रशंसनीयाः सन्ति। मम विश्वासः अस्ति यत् संस्कृतसप्ताहस्य आयोजनं जनेषु, विशेषतः युवसु अस्माकं सांस्कृतिकपरम्परां प्रति काञ्चित् नवां रुचिं नवम् उत्साहं च उत्पादयितुं महत्त्वपूर्णं योगदानं करिष्यति।आयोजनस्य सफलतार्थं हार्दिक्यः शुभकामनाः।

( नरेन्द्र मोदी )

## सम्पादकीयम्

### रजोगुणिनो जनाश्च आत्मीयान् सुखिनः पराश्च दुःखिनः

मानवानां कृते दयादानपरोपकारक्षमाविद्यादि शुभगुणाः परमात्मना सृष्टास्तथैव कामक्रोधलोभ मोहेर्श्याद्विषा सूयादिदुर्गुणा अपि सृष्टाः। यतोहि त्रिगुणात्मिका एषा सृष्टिः। तंत्र केचन सत्त्वगुणप्रधानाः केचन रजोगुणिनः केचन च तमोगुणिनो जनाः वर्त्तन्ते। सत्त्वगुणिनो जनाः सर्वदा अन्यान् जनान् सुखिनः योग्यान् उन्नति शीलान् प्रसन्नन् अवलोकयितुं कामयन्ते, रजोगुणिनो जनाश्च आत्मीयान् सुखिनः पराश्च दुःखिनः कामयन्ते। तमोगुणिनश्च स्वं स्वपरिवारं वाविहाय न कानपि सुखिनः द्रष्टुं वाञ्छन्ति। विश्वस्य सर्वे जीवा मां मम परिवारं वा विहाय दुःखिनाः सन्तु इत्येव विचारः सर्वदा तेषां दुष्टजनां भवति। अतः सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयः इति कामना करणीया।

## श्रीमद्भगवद्गीताशांकरभाष्यम्

**नारायणः परोऽव्यक्तात् अण्डमव्यक्तसम्भवम् ।**
**अण्डस्यान्तस्त्विमे लोकाः सप्तद्वीपा च मेदिना**

सः भगवान् सृष्ट्वा-इदं जगत, तस्य च स्थितिं चिकीर्षुः, मरीचि-आदीन्-अग्रे सृष्ट्वा प्रजापतीन्, प्रवृत्ति-लक्षणं धर्मं ग्राहयामास वेद-उक्तम् । ततः अन्याण् च सनक-सनन्दन-आदीन् उत्पाद्य, निवृत्ति-लक्षणं धर्मं ज्ञान-वैराग्य-लक्षणं ग्राहयामास । द्विविधः हि वेदोक्तः धर्मः, प्रवृत्ति-लक्षणः निवृत्ति-लक्षणः च । जगतः स्थिति-कारणं , प्राणिनां साक्षात्-अभ्युदय-निःश्रेयस-हेतुः यः सः धर्मः ब्राह्मणाद्यैः वर्णिभिः आश्रमिभिः च श्रेयोर्थिभिः अनुष्ठीयमानः । दीर्घेण कालेन अनुष्ठातणां काम-उद्भवात् हीयमान-विवेक-विज्ञान-हेतुकेन अधर्मेण अभिभूयमाने धर्मे, प्रवर्धमाने च अधर्मे, जगतः स्थितिं परिपिपालयिषुः सः आदिकर्ता नारायण-आख्यः विष्णुः भौमस्य ब्रह्मणः ब्राह्मणत्वस्य रक्षणार्थं देवक्यां वसुदेवात्-अंशेन कृष्णः किल सम्बभूव । ब्राह्मणत्वस्य हि रक्षणे रक्षितः स्यात् वैदिकः धर्मः, तत्- अधीनत्वात् वर्ण-आश्रम-भेदानाम् सः च भगवान् ज्ञान-ऐश्वर्य-शक्ति-बल-वीर्य-तेजोभिः सदा सम्पन्नः त्रिगुण-आत्मिकां स्वां मायां मूल-प्रकृतिं वशीकृत्य, अजः अव्ययः भूतानाम्-ईश्वरः नित्य-शुद्ध-बुद्ध-मुक्त-स्वभावः अपि सन्, स्व-मायया देहवान् इव जातः इव च लोक-अनुग्रहं कुर्वन् लक्ष्यते । स्वप्रयोजन-अभावेऽपि भूत-अनुजिघृक्षया वैदिकं धर्म-द्वयम् अर्जुनाय शोक-मोह-महा-उदधौ निमग्नाय उपदिदेश, गुण-अधिकैः हि गृहीतः अनुष्ठीयमानः च धर्मः प्रचयं गमिष्यतीति । तं धर्मं भगवता यथा-उपदिष्टं वेदव्यासः सर्वज्ञः भगवान् गीता-आख्यैः सप्तभिः श्लोक-शतैः उपनिबबन्ध तत् इदं गीता-शास्त्रं समस्त-वेदार्थ-सार-सङ्ग्रह-भूतं दुर्विज्ञेय-अर्थम्, तत्-अर्थ- आविष्करणाय अनेकैः विवृत-पद-पदार्थ-वाक्यार्थ-न्यायम्-अपि अत्यन्त-विरुद्ध-अनेक-अर्थवत्वेन लौकिकैः गृह्यमाणम्-उपलभ्य अहं विवेकतः अर्थ-निर्धारणार्थं सङ्क्षेपतः विवरणं करिष्यामि ? तस्य अस्य गीता-शास्त्रस्य सङ्क्षेपतः प्रयोजनं परं निः श्रेयसं सहेतुकस्य संसारस्य अत्यन्त-उपरम-लक्षणम्। तत् च सर्व-कर्म-सन्न्यास-पूर्वकात्-आत्मज्ञान-निष्ठा-रूपात् धर्मात् भवति । तथा इमं एव गीतार्थं धर्मं उद्दिश्य भगवता एव उक्तं -- ''सः हि धर्मः सुपर्याप्तः ब्रह्मणः पद-वेदने'' इति अनुगीतासु । तत्र एव च उक्तं -- ''न एव धर्मी न च अधर्मी न च एव हि शुभ-अशुभी ।'' (अश्व. 19-7) ''यः स्यात्-एकासने लीनः तूष्णीं किञ्चित्-अचिन्तयन्'' (अश्व. 19-1) इति ''ज्ञानं सन्न्यास-लक्षणम्'' (अश्व. 43-26) इति च । इह अपि च अन्ते उक्तं अर्जुनाय -''सर्व-धर्मान् परित्यज्य माम् एकं शरणं व्रज'' (भ. गी. 18-66) इति । अभ्युदय-अर्थः अपि यः प्रवृत्ति-लक्षणः धर्मः वर्णान-आश्रमाण् च उद्दिश्य विहितः, सः देव-आदि-स्थान-प्राप्ति-हेतुः अपि सन्, ईश्वर-अर्पण-बुद्ध्या अनुष्ठीयमानः सत्त्व-शुद्धये भवति फल-अभिसन्धि-वर्जितः शुद्ध-सत्त्वस्य च ज्ञान-निष्ठा-योग्यता-प्राप्ति-द्वारेण ज्ञान-उत्पत्ति-हेतुत्वेन च निःश्रेयस-हेतुत्वं अपि प्रतिपद्यते । तथा च इमम्-अर्थम्-अभिसन्धाय वक्ष्यति ''ब्रह्मणि-आधाय कर्माणि'' 'योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वा-आत्मस-हुद्धये'' इति इमं द्विप्रकारं धर्मं निःश्रेयस-प्रयोजनम्, परमार्थ-तत्त्वं च वासुदेव-आख्यं परं ब्रह्म-अभिधेयभूतं विशेषतः अभिव्यञ्जयत् विशिष्ट-प्रयोजन-सम्बन्ध-अभिधेयवय् गीता-शास्त्रम् । यतः तत्-अर्थ-विज्ञाने समस्त-पुरुषार्थ-सिद्धिः, अतः तत्-विवरणे यत्नः क्रियते मया।

# दैवीवाक् रूपेण प्रथिताऽस्ति संस्कृतभाषा

दैवीवाक् रूपेण प्रथिताऽस्ति संस्कृतभाषा। जननी चापीयं मन्यते प्रायशः सर्वासां भारतीयभाषाणाम्। स्वयंपुष्टा अन्याः सर्वाः पोषयन्ती राराजते इयम्। पूर्वोत्तरभारते हिन्दी, बंगला, पञ्जाबी, मराठी, दक्षिणभारते च तमिल, तेलुगू, मलयालम प्रभृतयः बहव्यः भाषाः तत्रापि गढवाली, डोगरी, मेवाड़ी, ब्रज, छत्तीसगढ़ी, राजस्थानी, मैथिली, भोजपुरी, बुन्देली, कश्मीरी, मणिपुरी, सिन्धी, कोकड़ी, असमिया, उड़िया इत्यादयः लोकभाषात्वेन व्यवह्रियमाणाः सन्ति। प्रायशः एताः सर्वाः संस्कृतसूत्रे मणिगणा इव प्रोताः दृश्यन्ते। संस्कृतभाषायाः भारतीयभाषासु विपरिणतेरेका सुदीर्घा परम्परा वर्तते। 'स्वबहुसंख्यकसन्तानो-त्पादनानन्तरमप्येषा लैटिनभाषावन्नोपरता तथा चेदानीमपि विद्वांसः हिन्दी, बंगला प्रभृति भाषापेक्षया संस्कृतभाषालेखने निर्बाधं व्यापारयन्ति स्वकीयां लेखनीम्। संस्कृतभाषाया अद्यापि तादृश एव मानः यादृश एलेग्जेण्ड्रियास्थाने समजनि ग्रीकभाषायाः। संस्कृतभाषाया अद्यापि तादृशी एव प्रतिष्ठा यादृशी मध्ययुगे लैटिनभाषायाः समभवत्' इत्येवंरूपेण संस्कृतं प्रति स्वहार्दं प्रकटीकृतं पाश्चात्यविदुषा मैक्समूलरमहोदयेन। एतेन सुस्पष्टमिदं यत् संस्कृतस्य प्रतिष्ठा चिरन्तनी।

कालिदासीयं मेघदूतमधिकृत्य तत्रत्यं त्रयोदशभारतीयभाषासु पद्यानुवादसङ्कलनं जोधपुरतः प्राकाश्यमागतम्। तत्र गढ़वाली, डोगरी, ब्रज, गुजराती, मेवाड़ी, छत्तीसगढ़ी, मराठी, मैथिली, नेपाली, राजस्थानी, भोजपुरी, बुन्देली, सदृश्यः भाषाः कथं संस्कृतेन समं स्वकीयमन्तः प्रकटयन्ति कथं च संस्कृत प्रति कार्तज्ञं प्रकाशयन्ति– इत्येवास्त्यत्रत्यः प्रतिपाद्यः। वस्तुतः महाकवेः कालिदासस्यामरकृतिषु श्रव्यकाव्यान्तर्गतं मेघदूतं देशे विदेशे च महतीं प्रतिथिं भजते। काव्यमिदं शापमूलकविप्रलम्भश्रृङ्गारस्योत्कृष्टं निदर्शनम्। यद्यपि ध्वन्यालोककारः 'श्रृङ्गार एवं मधुरः परः प्रह्लादनो रसः' इत्युक्त्या प्रह्लादहेतुत्वात् रसान्तरापेक्षया श्रृङ्गारमेव मधुरं मनुते तथापि तट्टीकाकारोऽभिनवगुप्तः श्रृङ्गारस्यापरपक्षं विप्रलम्भं संयोगान्मधुरतरं स्वीकारोति। 'सम्भोगश्रृङ्गारान्मधुरतरो विप्रलम्भः'। प्राच्यविद्वद्भिरपि एतदेवाङ्गीकृतं यत् 'न बिना विप्रलम्भेन सम्भोगः पुष्टिमश्नुते'। कालिदासस्यापि चेतः सम्भोगवर्णनापेक्षया विप्रलम्भवर्णने एवाधिकं रमते।

भवत् नाम, मन्दाक्रान्ता छन्दसोपनिबद्धं ग्रन्थमेनमाधारीकृत्य सन्ति ग्रथिताः आञ्चलिकभाषानुवादाः। एवंविधाः अपि शब्दाः लोके उपलभ्यन्ते येषां प्रयोगः संस्कृतेन सममाधुनिकभारतीयभाषास्वपि भवति। उदाहरणतः–

विद्युत्वन्तं ललितवनिताः सेन्द्रचापं सचित्राः
संगीताय प्रहतमुरजाः स्निग्धगम्भीरघोषम्।
अन्तस्तोयं मणिमयभुवस्तुङ्गमभ्रंलिहाग्राः
प्रासादास्त्वां तुलयितुमल यत्र तैस्तैर्विशेषैः।।1

अस्मिन् श्लोके व्यवस्थापितः विद्युत शब्दः गढवालीभाषायां, ललितवनिता गुजराती, इन्द्रचाप मराठी, सचित्र मैथिली, संगीत गढवाली, मुरज मैथिली, गम्भीर मेवाड़ी, अन्तस् बुन्देली, मणिमय छत्तीसगढ़ी, तुङ्ग हिन्दी, प्रसादशब्दाश्च गुजराती मराठी मैथिलीभाषायां तथैव प्रयुक्ताः सन्ति यथा द्विसहस्त्रवर्षपूर्वं रचितस्य मेघदूतस्य उपरितने चतुःषष्टितमे श्लोके सन्ति। एतेन आञ्चलिकभाषाभिः समं संस्कृतस्यान्तः सम्बन्धः सुस्पष्टः अस्ति। संस्कृतभाषायाः या अपरा विशेषता साऽस्ति तस्याः संश्लिष्टरूपता। अत्रास्ति नैपुण्यं समासविधेः। अनेकेषां पदानां संश्लेषणेनैकीकरणं समासस्य स्वीयं वैशिष्ट्यम्। आधुनिकभारतीयभाषाः सन्ति विश्लिष्टाः। संस्कृतमातुरुत्तराधिकारिण्य एताः। फलतः लघुसमासानां स्वरूपनिर्धारणं त्वत्राप्यस्ति। तथापि संस्कृतभाषावन्नास्ति सौविध्यम्। उदाहरणतः महाकविः 'सन्तप्तानां त्वमसि..... बाह्योद्यानस्थितहरशिरश्चान्द्रिकाधौतहर्म्या2 इत्येवंविधं सुदीर्घं संश्लिष्टं पदं प्रयुनक्ति। हिन्दीभाषायाः कविः 'हरिऔध' महोदयोऽपि पूर्वमवमेव लम्बायमानं समस्तं पदमकारि। यथा हि– हि– 'रूपोद्यानप्रफल्लप्रायकलिका राकेन्दुविम्बानना'। किन्तु सर्वत्र स साफल्यं नैवाधिगतवान्। अतएवात्र कतिपयेष्वनुवादेषु एवं विधानि दीर्घसमस्तपदानि नैव गृहीतानि सन्ति। यथा–

उद्यानराजित सदाशिव मौलिचन्द्र शोभायमान अछि हर्म्य जतै सदैव। (मैथिली) उजळति बाह्योद्यानि शिवाच्या भालचन्द्र किरणें। (मराठी)
चन्द्रचूड के चन्द्रकिरण म धोये महल अटारी।
(छत्तीसगढ़ी) बाह्योद्याने शिवशिर रही चन्द्रिकाथी रसे ला।
(गुजराती) केचन एवंविधा अपि शब्दाः आञ्चलिकभाषानुवादेषु सन्ति व्यवस्थापिताः ये तकनीको शब्दरूपेण प्रसिद्धाः सन्ति लोके। उदाहरणतः 'वप्रक्रीडापरिणतगजप्रेक्षणीयं ददर्श'3 इत्यस्मिन् वाक्ये विद्यमानस्य 'वप्रकीडा' पदस्य तत्तदांचलिकभाषासु अनुवादः द्रष्टुं शक्यः - झुकि गढ़ गिरावनहार सुन्दर तुङ्गवर कुञ्जर मनो। (ब्रज) डांड्यो कांठ्यो ढकिक जनु हो माटु हाथी उठौणू (गढ़वाली) हिन्दी भाषायाः कविरत्र 'वप्रकीडा' इत्यस्यार्थे 'तिर्यग्दन्तप्रहारः' अर्थमभिव्यनक्ति किन्तु 'वक्रीडा' शब्दस्य निष्कृष्टं मूलं च भावमाविष्कर्तुं मैथिली भाषैव सामर्थ्ययुता दृश्यते–

उत्खातकेलिकृतटेढ़रदप्रहार,
आक्रान्तकूटधन देखल हस्तितुल्य (मैथिली)

आधुनिकभारतीयभाषासु मराठी गुजराती सदृश्यः भाषाः तत्समशब्दान् बाहुल्येन, बुन्देली सदृश्यः भाषाः तद्भव शब्दान् बाहुल्येन उपस्थापयन्ति। गढ़वाली डोगरी सदृश भाषासु तत्सम तद्भवशब्दानां मध्ये सन्तुलनं विहितमस्ति। यथा–

नेत्राः नीता सततगतिना यद्विमानागभूमी
रालेख्यानां सलिलकणिका दोषमुत्पाद्य सद्यः।
शङ्कास्पृष्टा इव जलमुचसत्वादृशा यत्र जालै-
र्धूमोद्गारानुकृतिनिपुणा जर्जरा निष्पतन्ति।।4

1- मराठीभाषानुवाद तत्समशब्दाः–
सप्तभौमिक प्रसादाग्रीं त्वत्सम मेघातें।
प्रेरकपवने सततगतीनें नेता तैं चित्रें।।
जलकणदूषित होतां भिउनी जणूं विरल होती।
धूमानुकृतिकुशलगवाक्षीं बाहरेचि पडती।।
2- बुन्देलीभाषानुवाद तद्भवशब्दाः–
छियत सरग सतखण्डा महल महान।
आउत जात बयरिया नइँ कछु आन।।
........... धुवाँ सरीखे झिझर झरोखन गैल।
छू मन्तर हो जै हो मसकउँ पैल।।

सुस्पष्टमिदमत्र यदाञ्चलिकभाषाः कथमितस्ततः सिद्धिसोपानपर्वसु अग्रेसरन्ति। 'छूमन्तर' सदृश मुहावराव्याजेन अनुवादे मौलिकतामानेतुं प्रयतमानः दृश्यते कविः। ब्रज भाषानुवादे अनुप्रासविच्छित्या संस्कृतस्याभिप्रायं ब्रजशैल्यां व्यवस्थापयितुं कवेः कौशलं दृश्यते।

उदाहरणतः–

**मत्वा देवं धनपतिसखं यत्र साक्षाद् वसन्तं**
**प्रायश्चापं न वहति भयान्मन्मथः षट्पदज्यम्।**
**सभ्रूभङ्गप्रहितनयनैः कामिलक्ष्येष्वमौघै**
**स्तस्यारम्भश्चतुरवनिता विभ्रमैरेव सिद्धः॥5**

....भृकुटी कमानन अचूकनैनबानन को हीय कामबानन को बनतनिसानो है।

सर्वासामाञ्चलिकभाषाणामस्ति स्वीयं वैशिष्ट्यम्। नैजं माधुर्यं, स्वीया नैसर्गिकता, प्रवाहात्मकता लयबद्धता च। ब्रजभाषा यत्र लालित्य विकिरति तत्रैव राजस्थानीभाषा ओजगुणं प्रतनोति। ब्रजराजस्थानीभाषयोरनुवादे दृश्यते डिंगलपिंगलयोश्छटा। यत्र ब्रजभाषायै लालित्यप्रदाने अनुप्रासालङ्कारस्य योगदानम् तत्र राजस्थानी भाषानुवादे मूर्धन्याक्षरविच्छित्तिः गढ़वाली भोजपुरी भाषानुवादाः मूलवत् मन्दाक्रान्ताछन्दसैवोपनिबद्धाः सन्ति। छत्तीसगढ़ी– भोजपुरी भाषानुवादेऽन्त्यानुप्रासः।

# 'सर्वं ह्येतत् ब्रह्म - अयमात्मा ब्रह्म - सोऽयमात्मा चतुष्पात्'

सर्वेदेशेषु सर्वकालेषु च कोऽहमिति प्रश्ने सति मनुष्यः सर्वेक्षेत्रेषु आत्मनः तत्त्वमन्विष्यति। तस्य तत्त्वज्ञानस्य आकरः क इति परिशिलयितुं श्रुतिम् एव आश्रियते। यद्यपि स्वस्य ऊहेन आत्मनः तत्त्वज्ञानं सम्भाव्यते, प्रतिज्ञायते च बौद्धादिभिः तथापि ऊहस्य अनुमानार्थापत्यादिरूपस्य तदनुकूलयुक्तिरूपस्य वा अस्थिरत्वात् न तेन आत्मनः तत्त्वज्ञानं प्रेक्षावद्भि अङ्गीकर्तुं शक्यते। उक्तं च श्रुतावेव 'नैषा तर्केण मति आपनेया'1 इति। विवृतञ्च भाष्ये 'नैषा तर्केण स्वबुद्ध्भ्यूहमात्रेण न प्रापणीया इति अर्थः'2 इति। उक्तमेव भगवता सूत्रकारेण 'तर्काप्रतिष्ठानादप्यन्यथानुमेयमितिचेदेवमप्यविमोक्षप्रसङ्गः'3 इति। अतः आत्मनः श्रुत्यनुसारी निर्णय एव श्रेयाः। सा च श्रुतिः 'सत्यं ज्ञान-मनन्तं ब्रह्म' इति आरभ्य 'तस्मात् वा एतस्मादात्मन' इति ब्रह्म एव आत्मशब्देन व्यपदिशति। तेन च आत्मनः स्वरूपं/तत्त्वं ब्रह्मैव इति विज्ञाय-ते। इदमेव श्रुत्यन्तरेषु स्पष्टम् अवबोधकैः वाक्यैः प्रतिपाद्यते 'तत्त्वमसि',4 'अहं ब्रह्मास्मि'5 इत्यादयः। माण्डूक्योपनिषदि तु अस्य तत्त्वं स्पष्टीकर्तुं एकः सुलभ उपायः गृहीतः। तत्र हि आदौ 'सर्वं ह्येतत् ब्रह्म - अयमात्मा ब्रह्म - सोऽयमात्मा चतुष्पात्' इत्यादिवाक्यै अयम् आत्मा (जीवः) ब्रह्म इति जीवब्रह्मणोः ऐक्यम् प्रतिपादितम्। तच्च ऐक्यं कथं सम्भवति इति प्रश्नं मनसि निधाय आत्मनः चत्वारः पादाः रूप्यकादिवत्/कार्षापणवत् सन्ति इति प्रकल्प्य लोकप्रसिद्धाः जाग्रत्-स्वप्न-सुषुप्त्याख्याः तिस्रः अवस्थाः एव ते पादाः इति निरूप्य, एतादृशिभि अवस्थाभिः रहितः शुद्ध एव आत्मा - तदेव आत्मनः शुद्धं स्वरूपम्- तदेव जीवब्रह्मणो ऐक्यम् इति निपुणं निरूपितम्। अनेन निरूपणेन इदं प्रतिपादितं भवति यत् आत्मा अवस्थावत्वेनैव प्रसिद्धः यद्यपि तथापि न अवस्थावत्वम् आत्मनः स्वरूपम्। अवस्थानाम् अन्योन्यव्यभिचारित्वेन अव्यभिचार्यात्मस्वरूपता न सम्भवति। सर्वासु अवस्थासु यत् अनुस्यूतं शुद्धं चैतन्यं तदेव अव्यभिचार्यात्मस्वरूपम्। तस्मिंश्च एकस्मिन् इमा अवस्थाः कल्पिता इति अकल्पितम् एव शुद्धं चैतन्यं तुरीयशब्देनाभिधीयते इति।

आत्मनः चतस्रः अवस्थाः यथा -
जागरितस्थान आत्मा - वैश्वानरः विश्वः।
स्वप्नस्थानः - तैजसः।
सुषुप्तिस्थानः - प्राज्ञः।
तुरीयः - मुक्ति अवस्था।

जीवस्य तावत् जाग्रत्, स्वप्नः सुषुप्तिश्च इति अवस्थात्रयं विद्यते। तदुक्तं वेदान्तपरिभाषाम् 'स च जीवः जाग्रत्स्वप्नसुषुप्तिरूपावस्थात्रयवान्' इति। तच्च अवस्थात्रयं न जीवस्य स्वरूपलक्षणम् अपि तु तटस्थलक्षणमिति बोद्धव्यम्। स्वरूपलक्षणं तु चिद्रूपादिकम् (आनन्दरूपादि)।

जाग्रदवस्था तत्र इन्द्रियजन्यज्ञानावस्था जाग्रदवस्था। यस्यामवस्थायाम् अस्माकम् इन्द्रियव्यापारः सम्पद्यते सा अवस्था जाग्रदवस्था। न इयम् अवस्था आत्मस्वरूपा। स्वप्नावस्थायाम् आत्मनः सत्वे अपि जाग्रदवस्थाया अभावात्। इन्द्रियैः शब्दादिविषयज्ञानं नाम जाग्रदवस्था। अस्याम् अवस्थायां भ्रूमध्यगतोऽयं विज्ञानात्मा जीवः विज्ञानमयकोशस्थो व्यष्टि रूपस्य देहस्य निश्चयात्मिकां बुद्धिम् अधिष्ठाय स्थूलशरीराभिमानी सन् चिदाभासो व्यवहारिको 'विश्वः' तथा 'वैश्वानरः' नाम्ना अभिधीयते। 'जागरितस्थानो बहिः प्रज्ञः। सप्ताङ्ग एकोनविंशतिमुखः स्थूलभुग् वैश्वानरः प्रथमः पादः।' इति अस्य प्रतिपादकम् उपनिषद्वाक्यम्। इदानीम् आत्मनः प्रथमपाद अर्थात् जाग्रदवस्था विषये वर्णयते। इदानीम् उपनिषद्वाक्ये एकैकं पदमादाय आत्मनः इदं जाग्रदवस्थारूपं विवेचयामः। जाग्ररित स्थानम् 'जागरितं स्थानमस्येति जागरितस्थानः' इति भगवत्पादः शाङ्करभाष्ये प्रतिपादितम्। ''यत्र स्थित्वा जीवो जागर्त्ति सत्स्थानं जागरितं। तदेव स्थानं यस्य तादृशोऽयं प्रथमः पादः। तच्च स्थानं दक्षिणस्य चक्षुषोऽग्रभागो दक्षिणाक्षिमुखे विश्व इत्युक्तः। तत्र स्थित्वोऽयं परमात्मा जीवं स्थूलविषयान् भोजयतीत्यर्थः।'' इति आनन्दभाष्यवचनम्। स्वात्मव्यतिरिक्ते विषये प्रज्ञा यस्य स ब्रहिष्प्रज्ञः, बहिर्विषयेव प्रज्ञाऽस्याविद्याकृताऽवभासतिः इत्यर्थः शाङ्करभाष्ये प्रतिपादितम्। 'ब्रहिष्प्रज्ञः' इति पदस्य अर्थविषये आनन्दगिरिव्याख्यायाम् एवं प्रतिपादितं ''चैतन्यलक्षणा प्रज्ञा स्वरूपभूता व बाह्ये विषये प्रतिभासते तस्या विषयानपेक्षत्वात्, बाह्यस्य च विषयः बहिर्विषयेवेति''इति। तदनेन सर्वणव्याख्यानेन अयम् अर्थः प्रतीयते यत् आत्मा शुद्धचैतन्यस्वभावः नास्य विषयैः सह वास्तवः सम्बन्ध। विषयाणां कल्पितत्वात् अपि न अस्य तैः सह वास्तवः सम्बन्धः। तथाऽपि काल्पनिकेन विषयेण काल्पनिकः सम्बन्धः यदा भवति तदा अस्य प्रज्ञा बहिर्विषया एव आयाति इति कृत्वा बहिः प्रज्ञा इति उच्यते आत्मा तद्दशायाम् इति। अनेन च विषयप्रविलापने आत्मनः शुद्धचैतन्यरूपतासिद्धि-इति प्रदर्शितं भवति। सप्ताङ्गः शाङ्करभाष्यमतानुसारेण सप्ताङ्ग एवं प्रतिपादितम् - सप्ताङ्गान्यस्य तस्य हि वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मात्मा सन्देहो बहुलो बस्तिरेव रधिः पृथिव्येव पादौ इति अग्नि होत्रकल्पनाशेषत्वेनाऽऽहवनीयोऽग्निरस्य मुखत्वेनोक्त इत्येवं सप्ताङ्गानि यस्य स सप्ताङ्ग इति शाङ्करभाष्ये प्रतिपादितम्। इदं च सर्वं व्याख्यानं भाष्यव्याख्यानमूलकैम् एव। भाष्ये हि भगवत्पादैः। तथा सप्त अङ्गानि अस्य ''तस्य एतस्य वैश्यानरस्य इति अग्निहोत्रकल्पनाशेषत्वेन आवाहनीय अग्नि अस्य मुखत्वेन उक्त इत्येवं सप्त अङ्गानि यस्य सः सप्ताङ्गः'' इति व्याख्यातम्। अनेन भाष्यग्रन्थेन जागरित स्थानस्य विश्वस्य वैश्वानरस्य च एकत्वं पूर्वोक्तया युक्त्या अभिप्रेत्य विराट् पुरुषस्य यत् वैश्वानरशब्दितस्य सप्ताङ्गजातं तत् अस्यापि समम् इति श्रुत्यभिप्रायः वर्णित भवति। अत एव आनन्दगिरिव्याख्याने 'सप्ताङ्गत्वं श्रुत्यवष्टम्भ्येन विश्वस्य विशदयति।' इति अवतारितम्। सप्त च अङ्गानि यथा श्रुतिवर्णितानि विवृतानि वा तत्रैव।

1. सुतेजस्त्वगुणविशिष्टः द्युलोकः मूर्धा इति द्युलोकः शिरसः स्थाने उपदिश्यते।
2. विश्वरूपः श्वेतपीतादिगुणात्मकः सूर्यः चक्षुः विवक्ष्यते।
3. पृथक् नानाविधं वर्त्म सञ्चरणम् आत्मा स्वभावः यस्य इति व्युत्पत्या वायुः पृथग्वर्त्मात्मा इति कथ्यते। स च प्राणस्थाने उपदिश्यते।
4. बहुलः विस्तीर्णगुणवान् आकाशः सन्देहः देहस्य मध्यमः भावः।
5. रयिः अन्नं तद्धेतु उदकं बस्ति अस्य मूत्रस्थानम्।
6. पृथिवी एव पादौ ।
7. एतादृश विराट् पुरुषस्य वैश्वानरशब्दितस्य आहवनीय एव मुखस्थाने श्रुत्या उपदिष्टः।13

ततश्च एतादृशः सप्ताङ्गोपेतः वैश्वानरः/ विराट्-पुरुषः एव समष्टिस्वरूपः। तस्य व्यष्टिः विश्वः/ जागरितावस्थः आत्मा इति अनया भाष्यव्याख्यया समुपलभ्यते। तदेवं रीत्या समुष्ट्युपाधीनां नें सति तेषां प्रविलापे सर्वतः शुद्धः व्यापक एक आत्मा सिद्ध्यति इति प्रविलाप सौकर्यं महदेव दर्शितं भवति।

# 'दानस्य कर्मणा यमभिप्रैति स सम्प्रदानसंज्ञा स्यात्'

भाष्यते अनया या सा भाषा इति 'भाषा' शब्दस्य व्युत्पत्तिः। भूमण्डलेऽस्मिन् अविकृता प्राचीनतमा भाषा हि संस्कृतभाषा। जगति अस्मिन् भूषणस्वरूपा हि संस्कृतभाषा। सम्यक् कृतमिति विग्रहे सम्-पूर्वकात् कृ-धातोः क्त-प्रत्यये 'संपरिभ्यां करोतौ भूषणे' इति सुडागमे संस्कृतमिति। अतः संस्कृतं मनुष्यजनानां वाग्भूषणमेव। सर्वेषां संस्कृतभाषाशिक्षायां व्याकरणज्ञानस्य अतीव अपेक्षा वर्तते। षड्वेदाङ्गेष्वपि प्रधानं खलु व्याकरणम्। पतञ्जालिना उक्तम् - 'प्रधानं च षट्स्वङ्गेषु व्याकरणम्। प्रधाने च कृतो यत्नः फलवान् भवति।' व्याकरणज्ञानं विना शब्दानां प्रकृतिप्रत्ययादिज्ञानं न सम्भवति। 'व्याक्रियन्ते व्युत्पाद्यन्ते प्रकृति-प्रत्ययादि-विभागेन शब्दा अनेन इति व्याकरणम्' इति व्याकरणशब्दस्य व्युत्पत्तिः। सम्प्रति संस्कृत 'व्याकरणम्' इति नामश्रवणादेव अस्माभिः यद् व्याकरणमवगम्यते तत्तु पाणिनीयव्याकरणमेव। तथा हि व्याकरणग्रन्थः इति उच्यमाने आदौ एव अस्माकं मनसि यस्य ग्रन्थस्य चिन्ता समुदिता तत्तु महामुनेः पाणिनेः 'अष्टाध्यायी'ति। इदानीं समये प्रायः येषां व्याकरणशास्त्राणामधिकतया चर्चा क्रियते तानि सर्वाणि खलु पाणिनेः अष्टाध्याय्याश्रितान्येव।

**पाणिनीयव्याकरणस्य विकासे अस्माभिः प्रस्थानद्वयं दृश्यते -**

अष्टाध्यायीसूत्रक्रमानुसारं सूत्रप्रस्थानम्, संज्ञापरिभाषादिप्रकरणक्रमानुसारं प्रक्रियाप्रस्थानञ्चोति। तत्र प्रक्रियाप्रस्थाने कौमुदीप्रस्थानं सर्वोत्कृष्टम्। कौमुदीप्रस्थानेषु भट्टोजिदीक्षितस्य 'वैयाकरणसिद्धान्तकौमुदी' इति ग्रन्थः सर्वश्रेष्ठः। वैयाकरणानां मध्ये सिद्धान्तकौमुद्याः माहात्म्यविषये एकः श्लोकः प्रचलितोऽस्ति -

**कौमुदी यदि कण्ठस्था वृथा भाष्ये परिश्रमः।**
**कौमुदी यद्यकण्ठस्था वृथा भाष्ये परिश्रमः॥**

अत एव कौमुदीग्रन्थस्याध्ययनं सर्वेषां करणीयम्। भाषाज्ञानार्थं वाक्यस्य ज्ञानमपेक्षितम्। पुनश्च भाषायाः विश्लेषणार्थं कारकार्थज्ञानमपेक्षितम्, 'क्रियाजनकत्वं कारकत्वम्' इति। 'कारके' इति पाणिनीयसूत्रस्यार्थः एवं भवति - 'क्रियां करोति, सम्पादयति, निवर्तयति, निष्पादयति, जनयति इति कारकम्।' नैयायिकैः उक्तम्- 'क्रियान्वयित्वं कारकत्वम्'। अत्र तु मम अलोच्यविषयस्तावत् कारकप्रकरणस्थितेषु सूत्रेषु सम्प्रदानकारकस्य यथार्थस्वरूपविश्लेषणम्। 'सम्यक् प्रदीयते यस्मै' इति व्युत्पत्त्या सम्पूर्वकस्य दाधातोः शेषे सम्प्रदाने 'कृत्यल्युटो बहुलम्' इति सूत्रेण ल्युट्प्रत्यये सम्प्रदानशब्दो निष्पन्नः। सम्प्रदानमिति एका पाणिनीयसंज्ञा। टि-घु-इत्यादिवत् लघुसंज्ञा न। महत्याः संज्ञायाः फलं खलु अनुगतार्थलाभः। अत्र पाणिनिना सूत्रितं 'कर्मणा यमभिप्रैति स सम्प्रदानम्' इति।

**अस्य सूत्रस्य साधारणोऽर्थो हि -** कर्ता कर्मणा सह यस्य सम्बन्धं कर्तुम् इच्छति तस्य सम्प्रदानसंज्ञा भवति। अत्र प्रश्नो भवति कर्मणा सह नाम कस्य कर्मणा सह अत्रोच्यते महासंज्ञाकरणात् दानस्य कर्मणा इति अध्याहार्यम्। अत्र दीक्षितेनाप्युक्तं वैयाकरणसिद्धान्तकौमुद्याः कारकप्रकरणे वृत्तौ - 'दानस्य कर्मणा यमभिप्रैति स सम्प्रदानसंज्ञा स्यात्' इति। दानस्य कर्मणा इत्युक्ते 'अजां ग्रामं नयति' इत्युदाहरणे नयनक्रियायाः अजारूपकर्मणा सह सम्बन्धं कर्तुम् अभिप्रेतस्य ग्रामस्य न सम्प्रदानसंज्ञा। एवम् 'हस्तं निदधाति वृक्षे' इत्युदाहरणेऽपि वृक्षस्य न सम्प्रदानसंज्ञापत्तिः।

**वस्तुतः दानस्य अर्थो भवति -** स्वस्वत्त्वनिवृत्तिपूर्वकपरस्वत्त्वोत्पत्तिः। 'विप्राय गां ददाति' इत्यत्र देवदत्तादिकर्तृणां पूर्वं गोः उपरि स्वस्वत्त्वम् आसीत्। परन्तु तस्य निवृत्तौ सत्यां विप्रस्य स्वत्वं जायते तद्गोः उपरि। विप्रं प्रति दानात् परं देवदत्तस्य नाम दानकर्तुः कोऽपि अधिकारः न स्यात्।

## प्रथमं विषयत्यागो द्वितीयमनुकूलता, तृतीयं गुरुसंयोगश्चतुर्थं चेशचिन्तनम्-

मानवजीवनस्य माहात्म्यं न केवलमन्तःकरणविस्तारत्वादेव, अपितु देहसंरचनापि तत्र मुख्यहेतुः। केवलं मानवशरीरे एव प्राणानां, चक्राणां तथान्यविभिन्नयौगिककेन्द्राणामित्थं नैसर्गिकस्थितिर्वर्तते, यैः माध्यमैः मानवाः महामानवाः भवितुं शक्नुवन्ति। आसनेन दृढताऽऽयाति, प्राणायामेन सम्पूर्णशरीरस्थधातूनां शोधनमन्तराणां नाशनञ्च भवति। आसनेन सह प्राणिकविधिसंयोजनार्थं मुद्राणां प्रयोगो भवति। मुदं राति ददातीति मुद्रा इति व्युत्पत्तिः। अर्थात् यस्तु मूलस्वरूपं वर्तते सर्वेषां प्राणिनां तस्य स्पष्टरूपेणानुभवमेव एतासां मुद्राणां मुख्यार्थः। यतोहि निरोधावस्थितचित्तस्य मूलार्थस्त्वयमेवास्ति यत् योऽस्मि तस्यैवाऽऽपरोक्षानुभूतिरिति। मुद् मोदे तु रा दाने जीवात्मनापरमात्मनोः। उभयोरैक्यसंवित्तिर्मुद्रेति परिकीर्तिता। उभयोर्जीवात्मापरमात्मनो ऐक्यसंवित्तिः अखण्डज्ञानेऽवस्थितेः द्योतिका मुद्रेति। मुद्रायाः अभ्यासविषयकस्वरूपतायाम् अधिकारि-जनानाम् अत्यन्तमहत्त्वमस्ति। परमलक्ष्यप्राप्तये साधनचतुष्टयसम्पन्न एवाधिकारी। योगाभ्यासस्यात्यन्तावश्यकानि यानि साधनानि सन्ति तस्मिन् विषये योगरसायनग्रन्थे त्रयोदशात्मके श्लोके स्वामिब्रह्मानन्दैरुक्तम् यत् - प्रथमं विषयत्यागो द्वितीयमनुकूलता। तृतीयं गुरुसंयोगश्चतुर्थं चेशचिन्तनम्। एतेषां चतुर्णां समायोजनमेव पर्याप्तमस्ति योगसिद्धय इति। मुद्राणां प्राधान्यं वर्तते यौगिकक्रियायाम्। यतोहि अत्र मुख्य रूपेण बहिर्विधिनाऽन्तरङ्गेण सह सम्बध्यते। अनादिकालतः सर्वैस्साधकैः यन्त्रतन्त्रमन्त्रादिविभिन्नमार्गेषु मुद्रायास्साहाय्यमधि कृत्येव स्वस्वरूपानुसंधानरूपा लक्ष्यप्राप्तिः क्रियते। कारणमस्ति स्थूलबहिःपक्षस्य अन्तरङ्गसूक्ष्मपक्षेण सह मुद्राणामभावे सम्बन्धस्थापनमसम्भवमिति। हठयोगप्रदीपिकायां मुद्रावर्णनक्रमे प्रारम्भे एव नियोगरूपेणोद्घोषः प्राप्यते यत् - तस्मात्सर्वप्रयत्नेन प्रबोधयितुमीश्वरीम्। ब्रह्मद्वारमुखे सुप्तां मुद्राभ्यासं समाचरेत्। तस्मात् ब्रह्मद्वारमुखे सुप्ताम् ईश्वरीम् प्रबोधयितुं सर्वप्रयत्नेन मुद्राभ्यासं समाचरेत् इत्यन्वयः। अस्तु, शक्तिजागरणात्पूर्वं किमपि न भवितुं शक्यते, यतोहि शक्त्याः स्थूलस्वरूपं रजः शुक्रयोः स्त्रीपुंसोर्देहे स्पष्टरूपेण परिलक्ष्यते। अस्यां मैथुन्या सृष्टयां सर्वेषां जीवानामुत्पत्तिमूले उभयोः तत्त्वयोः विशिष्टसंयोगस्तु प्रथमहेतुः। स्पष्टत्त्वान्न विवेच्यते। योगः अर्थात् समाधिः, इत्यस्य सम्प्रज्ञातावस्थाया अपि प्राप्तिस्तु मानवशरीरस्थ-सारतत्त्वस्य औजरूपेणोर्ध्व गमनादेव संभवति। प्रायस्सर्वेषां जनानां मध्ये शरीरस्थमूल तत्त्वस्य किञ्चिद्रूपेणोर्ध्वगमनन्तु अस्त्येव, एतस्माद् प्रभावादेव शारीरिकमानसिक-ऽऽत्मिकस्तरीयकार्याणां सम्पादनं भवति। परन्तु अदृष्टपरमतत्त्वस्यापरोक्षानुभूत्यर्थं भोगद्वाराणां (अधस्थेन्द्रियाणां मुख्यतः) परिबन्धनं तथा च योगद्वारस्य सुषुम्नामार्गस्योद्घाटनमत्यन्तमपेक्ष्यते। सुषुम्नायाः पर्यायोऽस्ति मध्यमार्गः। मध्ये एव प्रचलतीति मध्यमार्गः। पूर्वमध्यमार्गः पश्चिममध्यमार्गश्च द्वौ मार्गौ स्तः। पूर्वमध्यमार्गे गुदाद्वार-सींवनीनाडी-उपस्थ-नाभि-हृदय-कण्ठ-भ्रूमध्य-सहस्त्र-दलपद्मानां च समावेशो भवति। शरीरस्य पृष्टभागस्याभिधानं पश्चिममध्यमार्ग इति। मुख्यत अग्रनम्रीप्रधानासनादिक्रियासु पश्चमार्गे वायुगतिः, पश्चनम्रीप्रधानासनादिक्रियासु पूर्वमार्गे वायुगतिश्च भवति। सुषुम्नामार्गस्योद्घाटनं विना शक्त्याः पूर्णरूपेणोर्ध्वगमनन्न सम्भवति। अतो यदि तु शिवशक्तिसम्मेलनाय, शिवस्तु ऊर्ध्वमधश्च शक्तिः, तयोर्मेलनाज्जीवस्य मुक्तिः मोक्षाय वा सन्नद्धः तर्हि योगमार्गे मुद्राणामभ्यासाद् नान्योऽस्ति मार्गः। विभिन्नमुद्राणां विभिन्नयौगिकग्रन्थेषु न्यूनाधिक्यरूपेण वर्णनं प्राप्यते। यथा - गोरक्षसंहिताग्रन्थे पञ्चमुद्राणामेव वर्णनं मिलति - मूलबन्धमुद्रा, उड्डीयानमुद्रा, जालन्धरबन्धमुद्रा, महामुद्रा, खेचरीमुद्रा च। यथा शिवसंहितायां तथैव हठयोगप्रदीपिकायामपि दशमुद्राणां वर्णनं वर्तते यथा -महामुद्रा महाबन्धो महावेधश्च खेचरी। जालन्धरो मूलबन्धो विपरीतकृतिस्तथा।उड्डयानं चैव वज्रोली दशमं शक्तिचालनम्। इदं हि मुद्रादशकं मुद्राणामुत्तमोत्तमम्। अपि च महामुद्रा महाबन्धो महावेधश्च खेचरी। उड्यानं मूलबन्धश्च बन्धो जालन्धराभिः। करणी विपरीताख्या वज्रोली शक्तिचालनम्। इदं हि मुद्रादशकं जरामरणनाशनम्।

## अमृतवाणी गीतातत्वार्थबोधः॥





**शत्रुघ्नश्रीनिवासाचार्यः पण्डित शम्भुनाथ शास्त्री वेदान्ती भागलपुर, ( बिहार )**

यस्त्वविज्ञानवान्भवत्यमनस्कः
सदाशुचिः।
न स तत्पदमाप्नोति संसारं
चाधिगच्छति। (कठोपनिषद्)

**संस्कृतभाष्यम् -** अविज्ञानमसारन्तु
भजते पुरुषस्तु यः।
जन्ममरणसंसार
मधिगच्छत्ययोगतः।।1
चलाचले हि संसारे
यत्किञ्चित्दृश्यते जगत।
विनंक्ष्यन्ति क्षणात्सर्वं
तस्मात् जागृहि जागृहि।

यः आत्मस्वरूपं न जानाति सः पुरुषः अमनस्कःअसंयतचित्तश्च मन्यते। आत्मनः ज्ञानं सामान्यज्ञानातिरक्तंविशिष्टं ज्ञानं कथ्यते,विशिष्टं ज्ञानं विज्ञानमिति मन्यते। एतदतिरक्तमिन्द्रयजन्य- विषयज्ञानम् अविज्ञानम्। जीवात्मस्वरूपविज्ञानं विहाय भजमानः पुरुषःमुहुर्मुहुः जन्ममरणसंसारमधिगच्छति । अविज्ञानवान् अनिगृहीतचित्तः सदा अपवित्रः भवति ,सःतत् अक्षरमव्यक्तं पदं न प्राप्तुं शक्नोति ,कैवल्यं प्राप्तुमयोग्य इत्यर्थः।

**तत्वार्थः- ( हिन्द्याम् )** निर्मलचित्तवृत्ति हो जिसकी वह पुरुष सारथी शब्द से अभिहित किया गया है। जीवात्मस्वरूप का ज्ञान ही विज्ञान कहलाता है इसके अतिरिक्त सांसारिक विषय भोग पदार्थ का ज्ञान अविज्ञान है। अविज्ञानवान् पुरष सदा अनमयस्क, असंयतचित्त और अपवित्र रहने वालाकहलाताहै ऐसा पुरुष उस रथी अर्थात अक्षरब्रह्म परमात्म के परम पद को प्राप्तकरने में न केवल असमर्थ होता है अपितु बार बार जन्म - मरण रूप संसार को प्राप्त होता है तथा वह परमात्मा के कैवल्य पद को प्राप्त करने की पात्रता खो देता है।

जगो जगो हे मानव ! अब तो क्यों गफलत में
सोये हो।जड़ चेतनमय जग असार है क्यों इसमें
भरमाये हो। सत्य ही तेरा जीवन साथी इसे जान
नहीं पाये हो। सियाराममय सब जग जानो
जीवन सफल बनायें हो।।2

अर्थात् चल - अचल वैभव रूप संसार में जो कुछ भी दिख रहा है वे सभी क्षण में नष्ट होने वाले हैं। हे मानव ! जिसे तुम अपनी शाश्वत सम्पत्ति मान बैठे हो, वे सभी नाशवान् हैं तुम्हारे शरीर पर भी तुम्हारा अधिकार नही है इसलिए उठो !जगो! जगो!।अर्थात् अपने स्वरूप को जानो!तुम जीवात्मा हो! जो नित्य है उसे पहचानो!

## ॥ अमृतं संस्कृतम्॥






**गीताज्ञान संचरण समितिः, पटना, विहार, अध्यक्षः डॉक्टर सुदर्शन श्रीनिवास शाण्डिल्यः**

।। कृष्णस्तु भगवान् स्वयम्।।
भारतीय वैदिक संस्कृतौ ' कृष्णस्तु भगवान् स्वयं' इति कथने गभीरं तात्पर्यं ऋषिपादानां संचरति। ।
पञ्चसकारयुक्त एव सम्पूर्णोऽवतारः परब्रह्मणः परिस्थितिपरिधौ अभिगण्यते।
के पञ्च सकाराः
1 संस्कृतम्
2 संस्कृतिः
3 साहित्यम्
4 संगीतम्
5 सेवा
इत्येतषां गुणानां कृष्णे सम्पूर्णः संचारः दृश्यते। ।
सम्पूर्णः संस्कृतविशेषज्ञः कृष्णः। ।
दार्शनिक ज्ञान दक्षः कृष्णः। । गीताज्ञाने तस्य सम्पूर्णः सुप्रभावः परिचरति । न तस्य व्याख्यानं नान्तं जगाम।
तेन संस्कृतं कृष्णः कृष्णः संस्कृतं।
अतः संस्कृतं न भाषा प्रत्युत परब्रह्मशक्तिसंचारिकाशक्तिः।।
तत्र परब्रह्मबोधाय सम्पूर्णं ज्ञानं व्यवस्थितम्।।
कृष्ण प्रतिपादिता गीता सम्पूर्णवेदोपिषद्सारभूता। । गीताज्ञाने संस्कृतं साहित्यञ्चेति उभे प्रतिष्ठिते।
वेणुधारणेन कृष्णे संगीतमपि प्रतिष्ठिते।।
कृष्णेन युधिष्ठिरयज्ञे सेवा विहिता, तेन कृष्णजीवने सेवत्वमपि प्रतिष्ठिते।।
इत्थं पञ्चसकारयुक्तः कृष्णः सर्वतोभावेन आजीवनं पर्यवतिष्ठत। ।
पञ्चसकारमूलं संस्कृतमेव।।
अतः संस्कृतं सम्पूर्णं।।
तस्य सम्बन्धेन मानवः सम्पूणी भवति।।
तेन संस्कृतं सर्वथात्मकल्याणकारकम्।।
अतः संस्कृतभाषैव सदैव मानव जीवनस्य कल्याणाय बहुप्रकारेण बहूदाहरणेन च प्रवर्तते
।। यथा गीताज्ञानं संस्कृतं।।
अतः संस्कृतनिष्ठः नूनं सत्कर्मसम्पन्नो भवेदेव।। यथा कृष्णः।।
अतः गीताज्ञानं समाश्रय कृष्णं समाश्रय।
।इदमेव मानव जीवनस्य सार्थक्यमिदम्।

**रक्षाबन्धनंभ्रातृभगिन्योः विवान कौमुदी पवित्रसम्बन्धस्य सम्मानाय शुभ पर्वः**

रक्षा बंधन रक्षाबन्धनंभ्रातृभगिन्योः पवित्रसम्बन्धस्य सम्मानाय शुभ पर्व एतत् श्रावणमासस्य शुक्लपूर्णिमायाम् आचर्यते। भ्रातृभगिन्योः पवित्रसम्बन्धस्य सम्मानाय एतत् पर्व भारतीयाः आचरन्ति। निर्बलतन्तुना बद्धः भ्रातृभगिन्योः सबलसम्बन्धः भारतीयसंस्कृतेः गहनतायाः प्रतीकः । मानवसभ्यतायां विकसिताः सर्वाः संस्कृतयः प्रार्थनायाः माहात्म्यं भूरिशः उपस्थापयन्ति। आदिभारतीयसंस्कृतेः विचारानुगुणं भ्रातुः रक्षायै भगिन्या ईश्वराय कृता प्रार्थना एव रक्षाबन्धनम् । भगिनी ईश्वराय प्रार्थनां करोति यत्, 'हे ईश्वर! मम भ्रातुः रक्षणं करोतु' इति। एतां प्रार्थना कुर्वती भगिनी भ्रातुः हस्ते रक्षासूत्रबन्धनं करोति। भगिन्याः हृदि स्वं प्रति निःस्वार्थ प्रेम दृष्ट्वा भ्राता भगिन्यै वचनं ददाति यत् , ' अहं तव रक्षां करिष्ये' इति । ततः उभौ परस्परं मधुरं भोजयतः। भगिन्या ईश्वराय स्वरक्षणस्य या प्रार्थना कृता, तस्याः प्रार्थनायाः कृते भगिनीं प्रति कृतज्ञता प्रकटयितुं भ्राता भगिन्यै उपहारम् अपि यच्छति । भ्रातृभगिन्योः सम्बन्धस्य एतत् आदानप्रदानम् अमूल्यं वर्तते ।

# गंगातटे श्रावणी सम्पन्ना



**प्रयागराजः। वार्ताहरः।** गंगातटे श्रावणी सम्पन्ना। 22 अगस्त 2021 ईसवीये रविवासरे प्रातः गंगायाः कालीमार्ग पश्चिम तटे अखिल भारतीय प्रयाग पण्डित सभायाः संयोजने डॉ बाबूलाल मिश्रस्य आचार्यत्वे डॉ राममिलन मिश्रस्य निर्देशने च श्रावणी कर्मनगरस्यै ग्राम्यांचलीयैः कर्मकाण्डि ब्राह्मणैः च सम्यक्रूपेण सम्पादितम्। अस्मिन् कर्मणिआदौ सर्वे पंचगव्यम् गृहीत्वा आत्म शुद्धिं सम्पाद्य पवित्री करणानन्तरे वृहत्महा संकल्पं चक्रतुः। तदुपरिगोमय, गोमूत्र, गोघृत, गोदधि, गोदुग्धंदूर्वा, धात्रीपफलम्, इत्रम् तैलम् प्रभृतिद्रव्यैः स्नात्वा ऋषि, पितृ, देवतर्पणम् च आकारितं।अन्ते सम्यक् स्नात्वा शुद्ध वस्त्राणि अवधार्य, तत्रैव श्रीसंकट मोचन हनुमान मन्दिरे ऋषिपूजनं, यज्ञोपवीत पूजनेन सह उपाकर्म परिपूर्णं जातम्।अनेन सह श्री शत्रुंजय पाण्डेयस्य आचार्यत्व श्रीधर्मज्ञानोपदेश संस्कृत महाविद्यालयस्य छात्राः आचार्याश्च समवेतरूपेण उपाकर्म अकुर्वन्। क्रमेऽस्मिन् हरीरामगोपाल कृष्ण सनातन संस्कृत आचार्याः छात्राश्च वाल्मीकि राम त्रिपाठि महा भागस्य आचार्यत्वे श्रावणी कर्मउक्तरीत्या सम्पादित वन्तः।



# संस्कृत दिवस समारोहः समायोजितः

**प्रयागराजः। वार्ताहरः।** रविवासरे स्थानीये श्रीवैकुण्ठधाम आश्रमस्य सभागारे अलोपी बागप्रयागराजे श्रीमद् आर्यावर्त विद्वत् परिषद् इत्यस्याः तत्वावधाने संस्कृत दिवस समारोहः समायोजितः। अस्य महोत्सवस्य अध्यक्षता डॉ रामजी मिश्रः मुख्यातिथिः प्रोजनार्दन प्रसाद पाण्डेय मणिः आशीर्वादातिथी जगद्गुरूः रामानुजाचार्यः स्वामीश्री धराचार्यजी महाराजः अथ च श्रीमद् जगद्गुरूः रामानुजाचार्यः स्वामी घनश्यामाचार्यमहाराजः आस्ताम्। अस्मिन् समारोहे श्री गंगानाथ केन्द्रीय संस्कृत विद्यापीठस्य साहित्य विभागाध्यक्षः प्रो जनार्दन प्रसाद पाण्डेयः मणिः अभिनन्दन पत्रेण, अंगवस्त्रेण, श्री फलेन प्रभृतिभिः सामग्रिभिः स्वामिपादाभ्याम् अभिनन्दनम् आकारितम्। क्रमेणैवजगद्गुरूः रामानुजाचार्यः श्रीमद्स्वामिश्रीधराचार्येण डा रामजी मिश्रस्यापि अभिनन्दनम् क्रियतेस्म।



कार्यक्रमस्य प्राक् संस्कृतच्छात्रैः मंगलाचरणम् आकारितं तदुपरिपं फूल चन्द्रदुबे महोदयः आगतानां अतिथीनाम् वाचिकं स्वागतं सम्पादितम्। समारोहेऽस्मिन् डा अल्पनारायण त्रिपाठि अल्पः डा रवि कुमार मिश्रः डा विनोद कुमार, श्री चक्रनारायणाचार्यः डाः रामजी मिश्रः,मणि महाभागाः स्वोद्बोधनेन समारोहं समलं चक्रुः। अनन्तरे स्वामिपादाः स्वामी घनश्यामार्चाः स्वामी श्रीधराचार्य जी महाराजः स्वकीयं आशिषंदत्वा सभाजनान् उपकृतवन्तौ। कार्यक्रमस्य सम्यक् संचालनम् डॉ शम्भुनाथ त्रिपाठी अंशुलः, आभार ज्ञापनं च डॉ रविकुमार मिश्रः अकुरूताम्।

## एकादश सहस्त्रपार्थिव पूजनस्य रूद्राभिषेकस्य च समापनं 24 तारिकायां

**प्रयागराजः। वार्ताहरः।** श्री वेदांग संस्थान प्रयागराज द्वारा समायोजिते दिव्य शिव महोत्सवावसरे जन कल्याणार्थं श्रावण मासपर्यन्तं एकादश सहस्र पार्थिव शिवलिंग, निर्माणंपूजनं रूद्राभिषेकं च परिपूर्णतां यातः। अस्योपलक्ष्ये 23 अगस्ततारिकायां अखण्ड श्रीरामचरित मानस रामायणं प्रारभ्य 24 अगस्त ईसवीये मध्याह्ने पूर्णतां यास्यतितदुपरि सायंकाले रात्रिपर्यन्तं वृहद् भोजस्य व्यवस्था सुनिश्चिताऽस्ति। स्थानम् श्रीरामानन्दाचार्यमठम् त्रिवेणी बन्धः प्रयागराजः। अयं कार्यक्रमः डॉ बाबूलाल मिश्रस्य निर्देशने आचार्य राममिलन मिश्रस्य संयोजने च भविष्यति।



# महापुरुष अच्युतानन्ददासः



"पञ्चसखा" युगस्य न केवलं ओडिआ साहित्यक्षेत्रे प्राधान्यता वर्तते अपितु उत्कलीय सामाजिकस्थथा आध्यात्मिकयुगस्य अभ्युदय अत्र संघटते इति नैव अत्युक्तिः । महान् साधकः एवं कविः अच्युतानन्दः ओडिआभाषा साहित्ये उत्कलीयधर्मधारायां च अभूतपूर्वी विस्मयः । षोडशशताब्द्यां तल्लेखनीद्वारा अजस्त्र संहिताः,पुराणानि,गीताः, वंशानुचरितानि,मालिकाः,राहासाः,कोइली-गुज्जरी-टीकाः,कल्पाः,ओगालाः,यन्त्राणि एवं वसाण-प्रभृतयः सृष्टयः निर्झरिताः अवारितरूपेण । श्रीजगन्नाथं केन्द्रीकृत्य तस्य रचनाः उत्फुल्लिताः पल्लविताः । जगन्नाथं अक्षरब्रह्मरूपेण कदाचित् बुद्धरूपेण कदाचिद्वा शून्यदेहि निराकारब्रह्मरूपेण सः पूजयामास । दिव्यद्रष्टा दार्शनिकः, रहस्यवादी कविः, असाधारण शब्दनिर्माता, समाजसंस्कारकः एवं आध्यात्मिकगुरुरूपेण च सः आत्मनः परिचयं प्राददात् । सारस्वत भाष्यकारत्वेन अच्युतानन्द आसीत् अनन्य सन्थः । पञ्चसखीनां मध्ये अच्युतानन्दः असाधारण प्रतिभावान् बभूव । महामान्य-महापुरुष-अच्युतानन्ददासस्य निर्दिष्ट-जन्मदिनांकविषये बहु विप्रतिपत्तयः श्रूयन्ते । कथ्यते पुरुषोत्तमदेवस्य 21 अंके अर्थात् 1482 खीष्टाब्दे कटकमण्डलस्य "नेमाल" इत्यस्य अनतिदूरे "तिलकणा" ग्रामे माघ शुक्ल एकादश्यां तिथौ अयं महात्मा एकस्मिन् शूद्रकुले अजनि । "उदय काहाणी" ग्रन्थे सांकेतिकरूपेण तेन स्वजन्मदिनांकविषये स्वशिष्यं रामचन्द्रं प्रति इत्थं कथितम्-

"पचारिलु राम जनम अंक । अति हिं गुपत बड विवेक डाहाण अंककु गुणिवु येवे । वाम अंक गोटि मिशाअ तेवे एमन्त साल होइव निजर । शुण रामचन्द्र एथि भितर सात भुज अरि मणि मित्रे । तारि सन घेन ओड्र राष्ट्रे ए अंके मुंहि जनम हेलि । अच्युत पामर नाम पाइलि "

"ओडिआ साहित्यर इतिहासे" पण्डित सूर्यनारायण दासेन तस्य जन्मांकः 1482 इति स्वीकृतः । तल्लिखित शून्यसंहिताग्रन्थावलोकनेन केचन ऐतिहासिकाः तज्जन्मदिनांकः 1502 इति कथयन्ति । अपरे 1511-1512 मध्ये इति समामनन्ति । केचन 1485 इति स्थिरीकुर्वन्ति । यद्भवतु तत्परिचयविषये तेनोक्तम्-

"अच्युतानन्द दास नाम मोहर नेमाल ग्रामरे घर । शूद्रकुले मुंहि जनम लभिछि आज्ञा घेनि प्रभुंकर " इति । ईश्वरदासस्य चैतन्यभागवते सः करणकुले जन्मोऽभूदिति लिखितमस्ति । अच्युतो जात्या कर्मकार आसीदिति "भावनावर" ग्रन्थे संसूच्यते । सः जात्या गोपाल इति किम्बदन्ती अस्ति । वर्णटीकायां तेन भणितम्-

"मोर पितामह से गोपीनाथ । दास तांकर अटे पाधित श्रीक्षेत्रे छामुकरण से थिले।छामु आज्ञारे दिन से काटिले तांक पुत्र मोरपिता अटन्ति। श्रीक्षेत्रे खुण्टिआ कर्मकरन्ति प्रताप नृपति सन्तोष ह्वन्ते। खुण्टिआ पद देले मोर ताते' इति। अच्युतानन्दः जातिस्मर आसीत् । तत्पूर्वजन्मप्रसंगे अनन्तयुगे सुदामः,सत्ययुगे कृपाजलः,त्रेतायां नीलः,द्वापरे सुबाहुः कलौ च सः अच्युतनामधारी आसीदिति तेन "गोपालंक ओगाल" पुस्तके भणितम् । गुरुभक्तिगीतायां तु पञ्चसखीषु चतुर्णां नामानि इत्थं भणितानि । यच्चोक्तं-

"अनन्त शिशु ये रामानन्द वैष्णव ।यशोवन्तदास मध्वाचार्य वैष्णव बलरामदास विष्णु श्यामदास होइ।नित्यानन्द वैष्णव अच्युत वोलाइ' इति । अत्र जगन्नाथदासस्य नाम नास्ति । अच्युतानन्दस्य पिता दीनबन्धु खुण्टिआ माता च पद्मावती आस्ताम्। तस्य धर्मपत्न्याः नाम चम्पावती आसीत्।

चम्पावती अडंग-गडस्य राज्ञः रघुरामचम्पतेः कन्या आसीत् । अच्युतस्य गदाधरः नामा पुत्रः, द्वौ भ्रातरौ एका च भग्नी आसन्। श्रूयते दीनबन्धुः बहुकालात् अनपत्य आसीत् । श्रीजगन्नाथ-कृपया हि तस्य सन्तानमभूत्। पुरीयात्रा समये गरुडस्तम्भं निकषा सः एकं शिशुपुत्रं दृष्टवान्। पश्चात् श्रीजगन्नाथसेवया तस्य गुणवान् पुत्र अजनि। तस्य श्रद्धानाम अगणि आसीत्। यदुक्तं शून्यसंहितायाम्-

"खुण्टिआ दीनबन्धु नाम बोलि ता पद्मावती वोलि नारी । प्रभु आज्ञा घेनि प्रवेश होइलि गर्भेण मुंहि ताहारि दशमास दशदिवस मध्यरे शुक्लमास एकादशी। जनम लभन्ते पिता मो देखन्ते अपुत्रीक दोष ध्वंसी जात कर्ममान पिता माता कले षठी उठिआरि तुले । अगणा अपोछा करिण मो नाम अनेक प्रकार देले के वोले अनाम अगणि त नाम के वोले अनन्त हरि । पिता माता शेषे डाकिलेत मोते अच्युत नामटि धरि "

दारिद्रता तस्य नित्य-सहचर आसीत् । उक्तं च शून्यसंहितायाम् अष्टादशाध्याये-

"तिलकणारे मुं जनम लभिलि केहि न चिन्हिले मोरे अगणि त वोलि माता डाकुथान्ति अन्न न मिळै घरे " इति । एकदा पित्रा सह सप्तमवयसि सः पुरीं गतवान् । तन्मिन्नेव काले श्रीचैतन्यः पुर्यामासीत् । पितुः निर्देशेन सः चैतन्यदेवस्य पादौ साष्टांगं प्रणिपपात । श्रीचैतन्यः अच्युतं दीक्षादातुं सनातनं आदिदेश । उक्तं च शून्यसंहितायाम्-

"शिरी सनातन स्वामींकु चाहिण आज्ञा देले शचीसुत । अच्युतानन्दंकु तुमे उपदेश कर हे याइ तुरित " अपि च गुरुभक्तिगीतायां-"नन्द किशोर वर्णमूले । रामकृष्ण ये गुरु देले सनातन ये दासंकु हिं। नन्दकिशोर देले कहि मुं अटे अच्युत ये देही । सनातन ये कृपा वहि ' अपि च तत्र-"दोलि ग्रामे तांक वास वैरागीर देही । एक शिष्य मुंहि तांक अन्य शिष्य नांहि ' अत्र यः सनातनः सः न चैतन्यदेवस्य अन्तरंग अपितु भिन्न एवेति प्रतीयते दीक्षां पश्चात् तस्य भावान्तरो जातः । स्वग्रामं प्राप्य सः एकस्मिन् वटमूले श्रीजगन्नाथं ध्यानकर्तुं चेष्टितवान् । कियत्कालानन्तरं ध्यानावस्थायां स्वप्ने एकः ज्योतिमन्यः पुरुषस्तत्रागत्य गुरुरुपेण तमुपदिष्टवान् । गुरुणा उपदिष्टः सन् आध्यात्मिकमार्गे मनोनिवेश । पश्चात् चैतन्यदेवात् मन्त्रं गृहीत्वा कौपीनं परिधाप्य गीतादिशास्त्रं प्रशिक्ष्य करतालं गृहीत्वा तीर्थाटनं कृतवान् । नानातीर्थं परिभ्रम्य वृन्दावने वर्षद्वयं उषित्वा पुनः चैतन्य सकाशात् नीलाचलं प्रस्थितः । तथाहि जन्मविवरणे-

"त्रिपुर ग्रामरे पटणा कुलरे पश्चिम वट मूलरे । अपूर्व वेश से धरि गुरुब्रह्म विजे कले मंगलरे पश्चिम वटर मूलरे वसिण स्वपन कथा पाञ्चिलि । से रूपकु ध्यान करिण मुंहि ये साक्षात प्राय मणिलि स्पूरिला ये पद से ज्ञानरे भेद गीता भागवत आदि । सिद्धान्त योगान्त सर्व विधिमत मन्त्र तन्त्र हिं इत्यादि मने मोर मिशि मनकु विध्वंसि हेतु पाटणारे वसि । हानिलाभ विकाकिणा लागिला मो सकल मिलिला आसि वाञ्चित फल तरुवर फलिला दिशिला ज्ञानर वाट । तेणु ग्राम स्थान मान मुं चिन्हिलि पाइलि तुमरि भेट ?" इति । अच्युतानन्दो महान् दार्शनिक आसीत् । न केवलं वेदादिशास्त्रेषु अपितु अस्मिन् संसारे यानि शास्त्राणि सन्ति तान्ति परमात्मतत्त्वं प्रतिपादयितुमसमर्थानि भवन्ति। तेषु परमात्मा अलभ्य इति तस्य बलिष्ठा युक्तिरासीत्। तन्मते "चारिखानि" ग्रन्थे- "बेद होइला ये मो तहुं आग। वेदान्त कहे उपदेश भाग एमाने यहुं जाणि न पारिले। निरंजन वोलि नाम धैले वेद आदि होइ तहिंकि नांहि। तहिंकि आन पटान्तर कांहि आवर येतेक ग्रन्थ पढिवा। कवि कृत्य वोलि ताहा छाडिवा विद्या पढिवा धन लोभे सेठि। विद्यंहु भिन्ने ज्ञान वोलि येटि' अनुभवं विना गुरूपदेशः सारहीनः। गुरुः मार्गप्रदर्शकः। किन्तु शिष्यः स्वानुभवेन अग्रेसरणीयः। कर्मणा ज्ञानोदयः पुनः ज्ञानेन कर्मनाशः, इत्यत्र कर्म-ज्ञानयोः पारस्परिक-सम्बन्धः स्थिरीकृतः। अनयोः संपर्कः पुष्प-फलवत् स्वीकार्यः । तथाहि-

'फुलकु लागि फ्रु येन्हे बढे।फ्रु बढिले फुल झडि पडे'इति।

मनः मनुष्यकृते सर्वश्रेष्ठं साधनम् । मनसः स्थिरीकरणं हि तस्य कृते अभ्युदयोपायः । उपनिषद् वचनानुसारं मन एव मनुष्याणां कारणं बन्ध-मोक्षयोः इति । अच्युतमतेन तु-

"तु मन तिनि जगतकु राजा। तोहो न आपिले देवे अपूजा तु यहुं तोते परते न याउ। जन्म मरण तेणु करि पाउ परकु थापि पर सिद्ध करु। मोह जले बुडि आपणे मरु रहि आतयात करु संसार। तो विना नांहि तिनिपुर असिद्ध रूप सिद्ध करि पारु सिद्ध कु किम्पा सद्भावे मारु यावत चन्द्र दिवाकर थिव । तोहो रखिले देह किम्पा यिव" ( द्वितीय खानि-9-14) इति । अच्युतानन्दः संसारस्य अनित्यता प्रमाणीकृता । सर्वे सांसारिक-बन्धवोऽपि अनित्याः । देह एव स्वस्य सखा इति तेन भणितम् । देहं विना न कोऽपि मुक्तिं प्राप्तुं शक्नोति । सुतरां देहस्य रक्षणं सर्वादौ कर्तव्यम् । उक्तं च-

"विद्या संपत्ति यौवन धन। देह थिले सिना थिव एमान सवु हजिले देह थिले पाइ। देह हजिले कि संसारु याइ" 'जन्म हिं एका मरण हिं एका। बन्धु बान्धव एकाहा सखा अर्थ लुवुधे कथा भावे संग। ये याजा करम ताहारि अंग ' अपि च तत्र-

"काहा होइ नांहु देह निमन्ते। एते मान देह लेछु केमन्ते देह नाशके तु रहिवु कांहि । सबु होइअछु देहरे थाइ ए देह गले तु कांहिकि लेखा। देह जीवन ए तोहरि सखा ?" अच्युतानन्दः परमो वैष्णव आसीत् । वेदपाठ विरहितेभ्यः पञ्चसखिभ्यः तदानीं ब्राह्मणाः स्वीय असूयाभावं प्रदशर्यन्ति स्म। जातिभेदप्रथां विलोपयितुं तस्य चेष्टा अवारिता आसीत्। शास्त्रं शस्त्ररूपेण व्यवहृत्य सः ब्राह्मणानां कुचेष्टा खण्डितवान् । श्रीकृष्णसेवां स्वीकृत्य आत्मानं शूद्र इति मन्यमानं दाससंज्ञया अभिहितः । तथाहि चौरासी मन्त्रे- "अच्युति दास मुं वैष्णव जाति । वैष्णव सेवारे थाइ मो मति ?" अपि च उदयकाहाणी ग्रन्थे- "शुण रामचन्द्र गोप कुमर । सेवा आमर श्रीकृष्ण पयर ? तहुं पञ्चसखा शूद्र होइलु । ज्येष्ठ कनिष्ठ वारि न पारिलु ?" इति । साधनापीठे नेमाले तस्य देहावसानं भवतु इति तेन स्वयं प्रार्थितम् पटलसंहितायाः पंचमे पटले-

**"सनातन धर्म स्थापि देह हजाइवि -** "सनातन धर्म स्थापि देह हजाइवि । नेमाल भूमिरे शून्य समाधि पाइवि ?" अपि च विचित्र यन्त्रे- "चित्रोत्पला कूले नेमाल घर । समाधि वट मो तहिं वेहार ?" अष्टगुज्जर्यामपि- "चित्रोत्पला नदी उत्तरे ग्राम लेम्बाल स्थान । सेठारे ए देह भजिव मागे एहि धिआन ?" इति नेमालस्थ साधनापीठे 105 वयसि तस्य देहावसानमभूत् । अच्युतानन्दस्य रचनासम्भारो विशाल आसीत् । स्वकृत रचनावलीनां परिचयदातुं तेन अणाकार संहितायां भणितम्-

"छतिश संहिता अठस्तरि गीता वंशानु सप्तविंशरे । उपवंशानु द्वाविंश खण्ड घेनि भविष्य शत खण्डरे

**पद पदावली लक्षेक ये ग्रन्थ सबु श्रीकृष्ण महिमा -** तो आगे कहिलु वरज कुमर ब्रह्म सारस्वत सीमा ?" इति । नैके ग्रन्थाः तेन विलिखिताः । संहितासु- शून्यसंहिता-छायासंहिता-ज्योतिसंहिता- अबाड संहिता-अनाहत संहिता-ज्ञान संहिता-हज संहिता-अणाकार संहिता-अकलित संहिता-वट संहिता-शब्द ब्रह्म संहिता वा चारिखानि-राज संहिता-ब्रह्म संहिता-एकाक्षर संहिता-भक्ति संहिता-पटल संहिता-मन्त्र संहिता-जन्म संहिता-क्षेत्र संहिता-पद्म संहिता-गोलक संहिता-बीज संहिका-जुमर संहिता- अकार संहिता-अमर संहिता एवं यन्त्र संहिताः अन्यतमाः । आसु संहितासु गुरुशिष्य परंपरा साधन प्रणाली च वर्णिता ।

**तत्प्रोक्त 78 गीतासु उपलब्धाः गुरुभक्ति गीता-गरुड गीता-**कैवर्त्त गीता-जाति पाटक गीता-युगाब्द गीता-भक्तिलीला गीता-वरण चरित गीता-हरिलीला गीता-उपदेश चक्र गीता-ज्ञान प्रदीप गीता-हरितिलक गीता-बीजसार गीता-जन्मलीला गीता-विन्दुसार गीता-मण्डल गीता-मणिबन्ध गीता-मणिवरण गीता-युगान्त सागर गीता-शून्यगीता-इन्द्रगोविन्द गीता-तत्त्वसागर गीता-परमगुप्त गीता-एकाक्षरी गीता एवं परमज्ञान गीताः प्रमुखा अन्यतमा भवन्ति । वंशानुचरितेषु सप्तखण्ड विशिष्टं हरिवंशपुराणं उत्कलराज्यस्य प्रतिगृहेषु प्रसिद्धम् । शतमालिकासु संप्रति अवतार मालिका-कलियुग मालिका-आगत भविष्यत मालिका-दशपटल मालिकाः उपलब्धाः ।

**रासग्रन्थेषु नित्यराहास-शून्यराहास-**गुज्जरी राहास-ठुलशून्य राहास-महानित्य राहास-वृन्दा राहास- परम राहास- दूती राहास-राहास प्रेमपञ्चामृत-विष्णु राहास-अनन्तजल राहास-राधारास-नित्यरास एवं पद्मवन राहासाः भक्तिरसेन ओतःप्रोताः । बोलिरचनासु ज्ञानसागर बोलि-हेतुसागर बोलि-ज्ञानतत्त्वसार बोलि-अलंकार बोलि-पद्म बोलि-ब्रह्माण्डसागर बोलि-वणभोजि बोलि-कुसुमकेलि बोलि-आदि बोलि-घटसागर बोलि प्रमुखाः सन्ति । कोइलि ग्रन्थेषु ज्ञानोदय कोइलि-वाखर कोइलि- डिबिडिबि कोइलि च प्रसिद्धाः ।

**अच्युतानन्दः लक्षाधिक पद-**पदावलीनां निर्माणं कृतवान् । तेषु अष्ट गुज्जरी-नव गुज्जरी-वर्णटीका-कल्पटीका-गणभूत टीका-चन्द्रकल्प टीका-पद्मटीका-शिवकल्प-वैशाखकल्प-तुलसीकल्प-पद्मकल्प-कलिकल्प-दशपटल-षोडश पटल-चबिश पटल-आगतसार- छाया परचे-रसाम्बुज सिन्धु-निर्घण्ट-पराद्धं- ध्कार बसाण-बारमास चबिश उपदेश-आठतत्त्व-विप्रचालक-अनन्तगोइ-वट वर्णना-श्रीसप्तांग सुधारण-श्रीहीन विधान भक्तियोग निणञ्य-वारमासी गीत-निशि अवकाश-मन्त्र यन्त्र तन्त्रभेद-गुपत ग्रन्थ-ब्रह्मविद्या-अणाकार ब्रह्म यन्त्र-कलि काहाणी-षडचक्र विचार-चौराशि यन्त्र-द्वितीबोध विलास-लक्ष्मीधर विलास-शरण पञ्जर-घाटसधा-गोपालंक ओगाल- उदय काहाणी- ब्रह्मशांकोलि-अभेदकवच- भवनावर-अमर जुमर-सर्वार्थ चिन्तामणि एवं सप्ता भागवतादि असंख्यग्रन्थाः विद्यन्ते । उत्कलीय गीतिसाहित्यक्षेत्रे तस्य अवदानमतुलनीयम् । भजन-जणाण-ओगाल-वारमासी गीतानि तस्य आध्यात्मिकक्षेत्रे स्वकीयं महत्वपूर्णस्थानानि भजन्ते । तद्यथा-

"बाइ मन हो वसि अवना वना अबना बनिले अमिशा मिशिब अमापरे मपा हेव तो धन ।" इत्यादि । अच्युतानन्दः श्रीजगन्नाथं शून्यपुरुष इति कथितवान् । शून्यपुरुषो नाम अणाकार ब्रह्म निर्गुणः । स नित्यकृष्णो वा गोलककृष्णः । पुरीधाम गोलकपुरो नित्यवैकुण्ठो वा । जगन्नाथः पुरुषोत्तमः शून्यपुरुषः । अत्र शून्यो नाम नाभावः किन्तु सक्रिय ज्योतिःस्वरूप एव । काया साधना- हठयोग-पिण्डब्रह्माण्ड तत्त्वेषु अच्युतानन्दः सिद्धहस्त आसीत् । शून्यपुरुष प्रसंगे तेन भणितम्-

"भला पचारिलु गुपत सन्धि । शून्यपुरुष शून्यपरे वन्दि । शुन्यपुरुष उदासरे रहे । शून्यपुरुष सबु माया भ्याये शून्यपुरुष दयालु अटै । शून्यपुरुष सर्व घटे रहि शून्यपुरुष कले नटघट । शून्यपुरुष जाणे छन्द कूट शून्यपुरुष शून्यरे मारै । मारि शून्य गति करै शून्यपुरुष अलगे रहिछि । शून्यपरे रहि लीला करुछि " इति । आध्यात्मिको गुरुः अच्युतानन्दो नमस्यः । भक्तिसाहित्ये तस्य योगदानमविस्मरणीयम्। अलं पल्लवितेन।

**सहायक ग्रन्थाः-**

1-सन्थकवि अच्युतानन्द दास ओ शून्यसंहिता- मृत्युञ्जय नायकः
2-अच्युतानन्द रचनावली- रत्नाकर चैनि
3-अच्युतानन्द दास- कुञ्जविहारी महान्तिः
4-अनादि संहिता -अच्युतानन्दः
5-अणाकार संहिता- अच्युतानन्दः
6-शब्दब्रह्म संहिता- अच्युतानन्दः
7-छयालिश पटल- अच्युतानन्दः
8-गोपालंक ओगाल- अच्युतानन्दः
9-प्रफेसर कृष्णचरण साहु रचना सम्भार
10-महापुरुष परिचय ओ बाणी- निमांइ चरण दासः
11-ओडिआ साहित्यर इतिहास- विनायक मिश्रः
12-ओडिशार धर्मधारारे पंचसखा परिकल्पना- नटवर सामन्तरायः
13-पञ्चसखा ओडिआ साहित्य- देवेन्द्र महान्तिः
14-सन्थ भक्ति साहित्य-चित्तरंजन दासः

**- लेखकः - नन्दप्रदीप्तकुमारः**

## रम्या रामायणी कथा

मर्यादा पुरुषोत्तम श्री राम की जीवन गाथा

॥श्री राम कथा॥

**भक्तिर्मुक्तिविधायिनी भगवतः श्रीरामचन्द्रस्य हे**
**लोकाः कामदुघाङ्घ्रिपद्मयुगलं सेवध्वमत्युत्सुकाः ।**
नानाज्ञानविशेषमन्त्रविततिं त्यक्त्वा सुदूरे भृशं
रामं श्यामतनुं स्मरारिहृदये भान्तं भजध्वं बुधाः

यदा ऋक्षराजो जाम्बवान् श्रीहनुमन्तं कथितवान्, हे हनुमत् अस्मिंल्लोके एतादृक्कञ्चित्कार्यं नास्ति, यद्भवान् कर्तुं न शक्नोति। भवान् पवनपुत्रोऽस्ति, तदपि कथं मौनं धारयित्वा सुदूरेऽतिष्ठत्। भवान् तु बलविवेकयोस्तस्य तुल्यो वर्तते। अस्मिंल्लोके कञ्चिदपि कार्यमेतादृशं नास्ति, यद्भवान् कर्तुं शक्नोति।

**भगवत्कार्यं कर्तुं भवदवतारो जातः।**
**कवन सो काज कठिन जग माहीं।**
**जो नहिं होइ तात तुम्ह पाहीं?**
**राम काज लगि तव अवतारा।**
**सुनतहिं भयउ पर्बताकारा?**

एतच्छ्रुत्वैव श्रीहनुमन्महाभागः पर्वताकारो भूत्वा बारम्बारं सिंहतुल्यगर्जनं कुर्वन् शरीरेण बहुविशलाकायो जातः। तस्य तं स्वरूपं दृष्ट्वा एतादृक्प्रतीयते यथा कश्चिद्गिरीणां देदीप्यमानो नृपः समुस्थितो दृश्यते।

**सिंहनाद करि बारहिं बारा।**
**लीलहिं नाघउँ जलनिधि खारा**

हे जाम्बवान्! भवान् वदतु अहं किम् करवाणि, त्रिकूडपर्वते विराजितां लङ्कापुरीमुत्खन्य नीत्वा अत्रैवानयानि वा लंकेशं दशाननं तस्य बन्धु-बान्धवादीनां सहितं यमपुरीं सम्प्रेषयानि। भवान् मह्यं समुचितं मार्गदर्शनं-प्रददातु, ममोपरि महती कृपा भविष्यति। सहित सहाय रावनहि मारी। आनउँ इहाँ त्रिकूट उपारी जामवंत मैं पूँछउँ तोही। उचित सिखावनु दीजहु मोही वीरोचितं श्रीहनुमद्वचनं श्रुत्वा ऋक्षराजो जाम्बवान्महाभागोऽकथयत्। भवान् तु केवलं भगवतीं सीतादेवीमन्वेषणं कृत्वा तत्समाचारं वदेत्। भगवान् श्रीरामः स्वयमेव दशाननं पराभवं करिष्यति। वयं सर्वे श्रीरामेण सह कौतुकेन चलिष्यामः, किन्तु वस्तुतो स्वभुजबलप्रतापेन प्रभुः श्रीरामः तं वधं विधास्यति। हे कपिश्रेष्ठ! भवभेषजस्य श्रीरघुनाथस्य यशगुणगानं ये जनाः कुर्वन्ति श्रुण्वन्ति गायन्ति च तेषां सकलमनोरथं त्रिसिरारिप्रभुः श्रीरामः कृपापूर्वकं पूरिष्यते इति शम्।

**-क्रमशः**

आचार्य अरविंद पांडेय

## अयं हृदयप्रदेशे भावावेगस्य केन्द्रप्रदेशे स्थित्वा देहयन्त्रं नियन्त्रयति

अस्माकं भारतवर्षे ये ये महात्मानो धरातलं पवित्रीकृतवन्तस्तेषु महात्मन अरविन्दस्य नाम सर्वोत्कर्षेण श्रूयते । तत्र द्विसप्तत्यधिकेऽष्टादशशतके अगष्टमासस्य पञ्चदशदिनांकेऽयं महात्मा कलिकता महानगर्यामेकस्मिन् कुलिने वंगीय-ब्राह्मण-परिवारे जनिमलभत।अस्य पितुर्नाम कृष्णधन घोषो मातुश्च नाम स्वर्णलता आसीत्। मृणालिनी देवी अस्य धर्मपत्नी आसीत्। उच्चशिक्षितोऽयं महात्मा एकाधारेण प्रख्यात-स्वाधीनता संग्रामी, दार्शनिकः, कविः, आध्यात्मिकगुरुः, योगी च आसीत्।भारतीय दर्शनक्षेत्रे तत्प्रोक्तं अरविन्ददर्शनं स्वकीयं महत्वपूर्णं स्थानं भजते। दर्शनशास्त्राणां पुंखानुपुंखचिन्तनं समीक्षणं विशेषतो वेदान्तदर्शनस्य योगदर्शनस्य च सूक्ष्मविवेचनं वरीवर्ति अरविन्ददर्शने। तेन कतिपयानि स्वतन्त्र मतानि च प्रदर्शितानि। तेषु चैत्यपुरुषतत्त्वमन्यतमम्। संप्रति दिङ्मात्रं विवक्ष्यतेऽत्र । अरविन्दनये अन्तरात्मा चैत्यपुरुषसंज्ञको जीवस्य प्रतिनिधिस्वरूपः, आत्मनो भिन्नः। समष्टिरूप आत्मा विश्वातीतो विश्वमय अपरिणामी ध्रुवश्च। मनुष्यशरीराधिष्ठाता चैत्यपुरुषः व्यष्टिरूपो देह-प्राण-मनसां भर्ता, नेता अविनश्वरः । अयं हृदयप्रदेशे भावावेगस्य केन्द्रप्रदेशे स्थित्वा देहयन्त्रं नियन्त्रयति। भगवन्तं प्राप्तुं प्रच्छन्नेन प्रकाश्येन जीवं प्रचोदयति।आत्मानं शिशुः भगवतः सन्तानरूपो भक्तरूपो वा स्वीकरणं चैत्यपुरुषस्य मुख्यस्वभावः । यद्यपि चैत्यपुरुषस्य भगवता सह भेदो नास्ति तथापि अभिव्यक्तौ कोऽपि भेदः स्वीक्रियते । जीवात्मा विश्वमय-विश्वातीतभगवति एकत्रितो भवितुमर्हति किन्तु चैत्यपुरुषः व्यष्टिभूत्वापि जीवस्य प्रतिनिधिरूपेण कार्यं कर्तुं शक्नोति । पुरुषापरपर्यायो जीवात्मा कारणकोषान्तर्गतो विश्वातीतो ब्राह्मीशक्तियुक्तः । कारणकोषस्य द्वौ पुरुषरूपौ प्रसिद्धौ । ऊर्ध्वरूपो जीवात्मा अस्मदादिसंज्ञायुक्तः । अधोरूप अन्तरात्मा चैत्यपुरुषः परिणामी, जीवस्य सचेतनकर्ता । जीवात्मा परंब्रह्मण अंशविशेषः अपरिणामी । अस्माकं प्रकृतसत्ता जन्ममृत्युरहितो नित्यःशुद्धबुद्धमुक्तस्वरूपः । स्वभावत अस्य विवर्तनं नास्ति, सच्चिदानन्दस्य एकत्वेऽस्य समावेशो भवति । शरीरे जीवस्य प्रतिनिधिः अन्नमयपुरुषः । प्राणेषु च प्राणमयपुरुषः मनसि च मनोमयपुरुषनाम्नाऽभिहितो वर्तते । हृदयान्तर्वर्तिपरिणामशीलसत्तारूपेण चैत्यपुरुषो वर्तते, यः खलु अमृतस्य प्रतिनिधिरुप उक्तः ।मनुष्यशरीरे चैत्यपुरुषस्य क्रमपरिणामः सम्भवति । मूलतः स अपूर्णः । जीवस्य सारूप-सायुज्येन च तस्य परिपूर्णता जायते । बीजरूपस्य चैत्यपुरुषस्य प्रकृत्याः कामनायाः सकाशात् अंकुरोद्गमो भवति । जन्मजन्मान्तरिणकर्मणा हि तस्मिन् शाखा-प्रशाखाः जायन्ते । पल्लव-पुष्प-फलानि शोभन्ते । यथा वृक्षस्य वृद्ध्यर्थं जल-वायु-आलोकादीनां प्रयोजनं भवति तथैव चैत्यबीजस्य । सः पार्थिवजन्मन अभिज्ञतां स्मरति । यदा चैत्यपुरुषे कर्तृत्व-नियन्तृत्वादि संकल्पा जायन्ते, देह-मनः-प्राणाः तस्मिन् सहयुक्ताः भवन्ति, तदा प्राकृतजीवनस्य अयमारम्भो भवति । चैत्यपुरुषज्ञाता न जीवात्मपरमात्मनो वास्तवतां ज्ञातुं शक्नोति । विवर्तनदृशा चैत्यपुरुषो यद्यपि मूलसत्ता तथापि स भगवतः सनातनांशः । जीवात्मा विवर्तनवादेन न परिणमते । चैत्यपुरुषस्य चेतना यदा पूर्णतामाप्नोति तस्मिन्नेव समये चैत्यपुरुष-जीवयोः संयोगः कथयितुं शक्यते नान्यथा । अस्माकं देहो यदा पञ्चभूते विलीनो भवति तदा कुत्र चैत्यपुरुषश्चेदुच्यते । प्राणतत्त्वं प्राणभूमौ कियत्कालं तिष्ठति, अन्ते प्राणमयकोषे विलीनो भवति । मनस्तत्त्वं मनोमयभूमिमतिक्रम्य मनोमयकोषे एवं चान्ते चैत्यपुरुषः चैत्यलोकं प्रविश्य तत्र विश्राम्यति । परवर्तिकाले चैत्यधाम परित्यज्य मनोभूमिं प्रत्यावर्त्य मनोपादानं संगृह्य प्राणमयं गत्वा प्राणोपादानं गृहीत्वा अन्नमयभूमिं पुनरागच्छति । अन्नमयदेहधारणकर्तुं जनकं-जननीं च स्वीकरोति । इत्थं चैत्यपुरुषस्य जन्म-मरणचक्रं जायते । यदा जडाधारदेहः पूर्णतया चिन्मयभूतो भागवतीतनुं विधास्यति तदा न तत्र पुनरागमनं चिन्त्यते ।

**- लेखकः - नन्दप्रदीप्तकुमारः**

## "शंकरस्य मतं चैतनस्य पन्थाः"

स्वामिनिगमानन्दः भारतवर्षस्य चत्वारि धामानि सप्तखण्डानि च परिव्राजकरूपेण परिभ्रम्य सर्वशेषे भोगक्षेत्रं पुरीधाम प्रत्यागतवान् । खीष्टतः चतुर्विंशत्यधिकोनविंशतिशतकादारभ्यचतुर्चत्वारिंशदधिकोनविंशतिशतकपर्यन्तमसौ महात्मा प्रायतः पुर्यां नीलाचलकुटीरेऽवस्थानं चकार । दशाधिकोनविंशतिशतकस्य वैशाखे मासे महात्मा निगमानन्दः प्रथमतः दुर्गापुरनामकाश्रमात् कतिपयैः शिष्यैः सार्द्धं पुरीमागतवान् । तत्पश्चात्तस्य मनसि पुर्यावस्थानं बलवत्तरं संजातम् । स एकविंशत्यधिकोनविंशतिशतके स्वामिस्वरूपानन्देन सह पुरीमागत्य अश्विनीकुमारमहाभागस्य कमलकुटीरे भाटकरूपेण कति मासान् स्थित्वा वंगदेशं प्रत्यागत्य पुनः द्वाविंशत्यधिकोनविंशतिशतके पुरीमागत्य "गोयेंका" इति धर्मशालायां कियद्दिनानि उषित्वा चतुर्विंशत्यधिकोनविंशतिशतकेऽनेन महानुभावेन नीलाचलकुटीरस्य गृहप्रवेशः कृतः ।उत्कलावस्थानसमये स्वामिनिगमानन्दः उत्कलस्य बहुविधस्थानानि परिभ्रम्य तत्रत्यधर्मप्राणमानवानां मनसि स्वकीयामृतवचनस्य गंगाप्रवाहं कृत्वा आसनमन्दिरादीन् प्रतिष्ठाप्य गुरुगतभक्तानामन्तःकरणसिंहासने "शंकरस्य मतं चैतनस्य पन्थाः" इति तत्त्वं समुपस्थाप्य लोकप्रियो बभूव । तन्त्रज्ञानयोगप्रेमसाधनचतुष्टयसंपन्न-निगमानन्दमतस्यालौकिकता उत्कलभूमौ महत्वपूर्णस्थानं भजते इति न विसंम्बादः । यतो हि तद्दर्शनं मुख्यतया प्रत्यक्षवादोपरि सुप्रतिष्ठितमासीत् । इदं निगमानन्ददर्शनं न केवलं मननशास्त्रमपितु अनुभूतेः विद्युत्तरंगरूपम् । अस्मिन् दर्शने संशयस्य नास्ति किमपि स्थानं येन संशेत । मनसि तर्कः । भौतिके ग्लानिः, किन्तु बोधिराज्ये कुतो वा संशयः कुतो वा विपर्ययः निगमशब्दः वेदप्रतिपादकः, सुतरामपौरुषेयः । अतीन्द्रियज्ञानपरिपुतः । मन्त्रद्रष्टृणामसौ संक्षिप्तवार्ता। एतस्मात् कारणात् निगमसिद्धसाधकस्य स्वामिनिगमानन्ददर्शनस्य विचारधारायाः पुंखानुपुंखगवेषणं मत्कृते निःसन्देहं दुर्बोधम्, तथापि तस्योत्कलावस्थानविषये किमपि याथातथ्यं कथयामि ।उत्कलभूमौ स्वामिनिगमानन्दस्य प्रभावः सर्वोपरि श्रीदुर्गाचरणमहान्ति उपरि निपतितः । यद्यपि तदानीं परमहंसस्य अन्ये बहवो मन्त्रशिष्याः यथा- सर्वश्रीचैतन्य चरण दास-वनमालिदाश-दामोदरदास-ईश्वरचन्द्रसाहु-हरप्रसाद-गोविन्दचन्द्रपट्टनायक-श्रीगुरुदास-नृपाल एकादशी-हरिचन्दन-क्षीरोदसिंह-वंशीधरवेहेरा-अश्विन्यादयश्च आसन् एतेषु दुर्गाचरणेन निगमानन्दभावधारायाः पृष्ठपोषकता समाचरिता । एतस्मात् सः नीलाचलसारस्वतसंघस्य परिचालकत्वेन नियुक्तः ।

## संस्कृतस्य माहात्म्यम्

भाषासु मुख्या मधुरा प्राचीना विश्वतोमुखी।भाति संस्कृतभाषेयं सर्वदा सर्वदा सती उन्नतेन स्थितिमता हिमवद्भूभृता यथा। त्वङ्गत्तरङ्गया पुण्यसरिता गङ्गया यथा तथैव भारतोर्वीयं दिव्य संस्कृत भाषया। सरस्वत्यापि विख्याता विभाति वसुधातले इयं भारत संस्कार कोशागारस्य कुञ्चिका। भाषान्तराणां माता वा धात्रि वा स्तन्यदा चिरम् संस्कार वत्यो जगति सन्तु भाषाः परः शतम्। तथापि संस्कृताभिख्या नान्यस्या दृश्यते क्वचित् बृहस्पतिः पुरा दैविं प्रोवाचेन्द्राय भारतीम्।इन्द्रेण व्याकृता पश्चादियं देवहितैषिणा संस्कृत्य पदानीह वाक्यं करोति हि।तेन संस्कृतभाषेति भाष्यकारः पतञ्जलिः आर्याणां मातृभाषेयमार्यावर्तनिवासिनाम्।आसीत् पुरा पाणिनीये भाषाशब्देन वर्णिता मृतभाषेति जल्पन्तु मृतसंजीविनीमिमाम्। पामराः पण्डितम्मन्याः परमार्थ पराङ्मुखाः पूर्णापि स्वीचकारैषा भाषान्तरपदान्यपि। सरिद्भ्यो नीरमादत्ते सम्पूर्णोऽप्यम्भसां निधिः देश भाषा विकासार्थं तत्तद् भाषासु पण्डिताः ।स्वीकुर्वन्ति यथाकामं संस्कृतात् पदसंचयम् 'सम्परिभ्यां करोतौ सुट्' भूषणार्थे विधीयते ।तेन भूषितभाषेति विख्याता पाणिनेर्मते न केवलं भूषिता सा भूषयत्यपि भाषकान कुमारसम्भवे काव्ये कालिदासवचो यथा । "संस्कारवत्येव गिरा मनीषी तया स पूतश्च विभूषितश्च' इति द्विजानां व्यवहारो हि संस्कृतेनैव सर्वदा।आसीदिति ज्ञातमिह वाल्मीकेर्वचनामृतात् आरण्यकाण्डे वातापिकथायां दृश्यते किल। 'धृत्वेल्वलो विप्ररूपं संस्कृते व्याजहार ह' "धारयन् ब्राह्मणं रूपमिल्वलः संस्कृतं वदन् ।आमन्त्रयति विप्रान् स्म श्राद्धमुद्दिश्य निर्घृणः' हनुमत्कृतशञ्रपि सुन्दरे काण्ड ईरिता । एतदेव ज्ञापयति संस्कृतस्य स्थितिं तदा ।

**प्रेरणाश्रोत**

**जगदगुरू शंकराचार्य ज्योतिष्पीठ काशी पीठाधीश्वर ब्र.ली. स्वामी विद्यानंद सरस्वती जी महराज (मौनी जी), शाश्वतानन्द सरस्वती जी महाराज।**

**संरक्षक मण्डल**

**योग गुरू स्वामी आनन्द गिरि जी**
(बांध स्थित बड़े हनुमान जी )

**डॉ भगवत् शरण शुक्ल**
**प्रोफेसर**-व्याकरण विभाग-संस्कृतविद्या धर्मविज्ञान संकाय
काशी हिन्दू विश्वविद्यालय वाराणसी

**प्रमोद बंसल**
निदेशक-महारानी चाय, प्रयागराज

**सलाहकार**

**श्रीमती अनामिका चौधरी**
(सदस्य राज्य महिला आयोग)
**डा. पुष्पा पाल** (एमजीएम हास्पिटल)
**- सुनील सराफ**
(अवतार केमिस्ट)
**-पं. देवेन्द्र प्रसाद त्रिपाठी**
-एसो. **प्रो. डॉ. मुरली मनोहर द्विवेदी**
**-डॉ. शम्भुनाथ त्रिपाठी** (अंशुल)
**-डा. मोरार जी त्रिपाठी**
**-आचार्य कुशलदेव**
( प्रवक्ता गुरुकुल महाविद्यालय ततारपुर हापुड़।)
**-महेश जी कपूर**
**डा.** कृष्णानन्द पाण्डेय
**फादर** - थॉमस कुमार
**उपसम्पादक** - विनम्र शुक्ल
**विशेषवार्ताहरः**
डॉ प्रदीप्त कुमार नंदः

**प्रयागराज ( इलाहाबाद )**

**RNI No. : UPSAN/2018/76680**

स्वामी मुद्रकः प्रकाशकश्च **आनन्द नारायण शुक्ल** द्वारा रमा प्रिन्टिग प्रेस, 53/25/1,ए बेली रोड, नया कटरा, प्रयागराज से मुद्रित एवं 1286बी/541बी नेहरू नगर मीरापुर, प्रयागराज से प्रकाशित।

मो.-9415633297

**संपादक-राकेश शर्मा**

**वैधानिक सूचनाः** आह्निक वार्ता पत्रम् से सम्बन्धित समस्त विवाद के निपटारे का क्षेत्र इलाहाबाद (प्रयागराज) न्यायालय होगा।